

श्रीमज्जयतीर्थविरचितपद्यमालाव्याख्यानभूता

श्रीजयरामाचार्यविरचिता

# पूजाकल्पलता

सम्पादकः - पं. मदभावी सञ्जीवाचार्यः

प्रकाशनम् - विश्वमध्वमहापरिषत् , उत्तरादिमठः

श्रीमज्जयतीर्थपूज्यपादविरचिता

# पद्यमाला

श्रीजयरामाचार्यविरचिता

# पूजाकल्पलता

... सम्पादकः ...

पं मदभावि सञ्जीवाचार्यः

... प्रकाशनम् ...

श्रीमन्मध्वाचार्यमूलमहासंस्थानम्

श्रीउत्तरादिमठः

विश्वमध्वमहापरिषत्

बसवनगुडि, बेंगळूरु - ४

# POOJA KALPALATA

A commentary on Padyamala of Shri Jayateertha by Sri Jayaramacharya expounding the Vaishnava procedure of worship.

Compiled by : **Pt. Madabhavi Sanjeevachar**

Published by : **Vishva Madhwa Mahaparishat Bangalore.**

Copies : 1000

First Edition : **November 2010**

No.of Pages : **136**



Price. [In India] **Rs. 50**
{Outside India} **$ 5**

Copies can be had from :

**Vishva Madhwa Maha Parishat**
Research Center, #11, 2nd Floor,
Uttaradimath Building, Uttaradi Math Road,
Shankarpuram, Basavanagudi
BANGALORE - 4 Phone : 080 26603692

Type Setting : V.M.M.P Research wing.

Cover Design by Gopalakrishna Davanageri

Printed by :

**VAGARTHA,** 149 8th Cross, N R.Colony, Bangalore-4 Ph.22427677.

# विषयानुक्रमणिका

## अथ श्रीजयतीर्थमुनीन्द्रकृता पद्यमाला

**प्रणम्य श्रीपतिं सर्वान् गुरूंश्चाथ प्रवक्ष्यहम् ।**
**यथामति हरेः पूजाविधिं वैष्णवसंमतम् ॥**

## अथ श्रीजयरामाचार्यविरचिता पूजाकल्पलता

श्रीमानुग्रतमान्तरायतिमिरव्रातातितिग्मद्युतिः
स्वामी स्वाभिमतप्रदानविजितस्वर्द्रुर्नृकण्ठीरवः ।
श्रीवक्त्राम्बुजसौन्दरीशुभतमामोदं लिहद्भ्यां मुहुः
पायात्पावनसंस्मृतिस्स्वनयनालिभ्यां समानन्दयन् ॥१॥

श्रीमद्धनूमद्धृदयाम्बुजातसंल्लग्नसीताङ्घ्रिपादपद्मम् ।
इक्ष्वाकुसद्वंशशिरोवतंसं श्रीरामचन्द्रं मदुपास्यमीडे ॥२॥

श्रीविष्णुपूजाविधिना धरायां पर्याप्तकामान्स्वजनान्विधातुम् ।
यस्तन्त्रसारामरपादपं व्यधाच्छ्रीमध्वराजं तमहं प्रपद्ये ॥३॥

राज्ञो वा प्रतिरोधनेऽपि परतो जाते प्रमादेऽपि वा
श्रीविष्णोरभिपूजनस्य घटना स्याच्चेन्न वन्धच्छिदः ।

यैश्चीर्णा न जपास्तदर्चनफलं श्रीपद्यमालाकृति
र्दास्यत्येवमकारि तान्गुरुवरांश्श्रीमज्जयार्यान्नुमः ॥४॥

श्रीमन्मध्वगुरोरपारसमयाम्भोधौ निमज्यादरा
दुर्ज्ञर्हुस्सरहस्यरत्ननिचयं ये मुक्तिधीगोचरम् ।
येषां काञ्चनकामिनीविषधियां शिष्याः प्रसादोदया
दापुस्तां धियमेव नौमि सततं ताञ्श्रीजयार्यान्गुरून् ॥५॥

नानालक्षमितैस्सशर्करपयोदध्याज्यमध्वाम्रसं
पातैश्श्रीतुलसीसुगन्धकुसुमैर्दीपैरपूपादिभिः ।
शेषार्यास्समतोषयन्प्रतिदिनं ये शेषतल्पं वहून्
श्रीमध्वामृतसेविनो व्यधुरलं तांस्तातपादान्भजे ॥६॥

पद्यमालामुपन्यस्य स्ववाचां परिशुद्धये ।
तत्र तत्र यथाबुद्धि तत्तात्पर्यमुदीरयन् ॥७॥

शेषार्यतनयो रामो जयार्यचरणार्चकः ।
करोति हरिपूजायाः पद्धतिं तत्प्रमोदिनीम् ॥८॥

**ब्राह्मे मुहूर्ते प्रबोधः**

प्रत्यहं ब्राह्मे मुहूर्ते प्रबोधरूपं कर्मावश्यकम् ।

'ब्राह्मे मुहूर्ते देवानां पितॄणां च समागमः ।
जागरस्तत्र कर्तव्यो देवसम्माननं हि तत्' ॥ इति स्मृतिरत्नावल्युक्तेः ।

'ब्राह्मे मुहूर्ते या निद्रा सा पुण्यक्षयकारिणी ।
तां करोति च यो मोहात्पादकृच्छ्रेण शुध्यति ॥'
इति स्मृतिप्रदीपे तदकरणे प्रत्यवायोक्तेश्च ।

तत्र ब्राह्ममुहूर्तः उषःकालः । प्रसिद्धश्चेति छान्दोग्यभाष्ये । उदयात्पूर्वं पञ्चघटिकावधिः यः कालः स एवोषःकालशब्दवाच्यः । 'पञ्च पञ्च उषःकालः' इत्युक्तेः । स एव ब्राह्ममुहूर्त उच्यते । तथा च प्रत्यहं रात्रेः पश्चिमभागे

पञ्चघटिकात्मके ब्राह्मे मुहूर्ते उद्बुध्य नारायणस्मरणं कृत्वा शयनात्समुत्थाय प्रातस्स्मरणशौचयोः पौर्वापर्याभावात् यदि प्रातस्स्मरणात्पूर्वमेव कृतशौचादिः तदा शौचाद्यनन्तरमेव प्रातस्स्मरणं कर्तव्यम् । यदि च पूर्वमेव प्रातस्स्मरणं कृतं, तदा तदनन्तरमेव शौचादिकं कार्यम् । प्रातस्स्मरणप्रकारश्च पादौ मुखं च प्रक्षाल्य शुक्लकम्बलादिशुद्धवस्त्रं परिधाय यथाविधि मन्त्रस्नानं कृत्वा

**ध्यानस्नानम्**

'ध्यानस्नानं प्रवक्ष्यामि द्वाभ्यामपि परं हि तत् ।
खे स्थितं पुण्डरीकाक्षं मन्त्रमूर्तिं प्रभुं स्मरेत् ॥१॥

अनन्तादित्यसङ्काशं वासुदेवं चतुर्भुजम् ।
शङ्खचक्रगदापद्मदिव्यपीताम्बरं हरिम् ॥२॥

श्यामलं शान्तनयनं प्रसन्नवदनं शुभम् ।
अनेकरत्नसंच्छन्नस्फुरन्मकरकुण्डलम् ॥३॥

वनमालापरिवृतं नारदादिभिरर्चितम् ।
सुवर्णकङ्कणैर्दीप्तं किङ्किणीवरशोभितम् ॥४॥

केयूरहारिणं देवं सुवर्णमुकुटोज्ज्वलम् ।
ध्वजवज्राङ्कुशालक्ष्मपादपद्मं सुनिर्मलम् ॥५॥

तत्पादोदकजां धारां निपतन्तीं स्वमूर्धनि ।
चिन्तयेद्ब्रह्मरन्ध्रेण प्रविशन्तीं स्वकां तनुम् ॥६॥

तया संक्षालयेद्देहमन्तर्देहगतं मलम् ।
तत्क्षणाद्विरजा मर्त्यो जायते स्फटिकोपमः ॥७॥

इदं ध्यानं वरं मन्त्रात्सहस्रगुणमुत्तमम् ।
सार्धत्रिकोटितीर्थेषु स्नानात्कोटिगुणाधिकम् ॥८॥

यो नित्यमाचरेदेवं स वै नारायणं स्मरन् ।
कालमृत्युमतिक्रम्य मोक्षमेति न संशयः ॥९॥

इडा भागीरथी गङ्गा पिङ्गला यमुना स्मृता ।
तयोर्मध्यगता नाडी सुषुम्नाख्या सरस्वती ॥१०॥

ध्यानह्रदे ज्ञानजले रागद्वेषमलापहे ।
यस्स्नाति मानसे तीर्थे स याति परमां गतिम् ॥११॥

अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यस्स्मरेत्पुण्डरीकाक्षं स याति परमां गतिम् ॥१२॥

इत्युक्तप्रकारेण ध्यानस्नानं विधाय गोपीचन्दनेन तुलसीमृत्तिकया वा पुण्ड्राणि धृत्वा कृताञ्जलिपुटो भूत्वा स्वहृत्पद्मगतं प्रसन्नवदनं नलिनायतेक्षणं श्रीमुख्यप्राणकरकञ्जपूजितं बिम्बाख्यं हरिं ध्यात्वा स्वदेहेन्द्रियादिषु स्वप्रकाश-सच्चिदानन्दाद्यात्मकदेहादिमान् अन्नमयादिरूपी भगवान् आस्ते इति भावयित्वा जाग्रदवस्थाप्रवर्तकः अष्टादशभानुषमुखानि मध्यमं गजमुखमित्येकोनविंशति-मुखः विश्वनामको भगवान् मद्दक्षिणाक्षिणि आगत्य जाग्रदवस्थां प्रवर्तयति तदनुग्रहेण अहं जागर्मीत्यनुसन्धाय 'स्वामिन् तव दासोऽस्मि, यत्प्रियं तव तदेव कारय, अप्रिये मम मनआदीन्द्रियाणि न प्रेरय' इति प्रार्थयेत् । ततः स्वात्मानं स्वदेहं परमात्मानं च चिन्तयेत् ।

तदुक्तं हारीतेन –

'प्रत्यूषे सहसोत्थाय सम्यगाचम्य वारिणा ।
आत्मानं देहमीशं च चिन्तयेत्संयतेन्द्रियः ॥१॥

ज्ञानानन्दमयो नित्यो निर्विकारो निरामयः ।
देहेन्द्रियात्परस्साक्षात्पञ्चविंशात्मको ह्यलम् ॥२॥

अस्मिन्देहे वसाम्यद्य शेषभूते हि शार्ङ्गिणः ।
शुक्लशोणितसम्भूते ज्वररोगाद्युपद्रिते ॥३॥

मेदोरक्तास्थिमांसादिहेयद्रव्यसमाकुले ।
वसामि सर्वदुःखानामालये सुखभाजने ।
तस्माद्विमोक्षणार्थाय चिन्तयिष्यामि केशवम् ॥४॥

वैकुण्ठे परमेऽनन्तासने क्षीरपयोनिधौ ।
अनन्तभोगपर्यङ्के समासीनं श्रिया सह ।' इति ।

प्रातर्जप्यम्

योगदीपिकायाम् –

शयनात् प्रातरुत्थाय कीर्तयेन्मधुसूदनम् ।
कीर्तनात् तस्य पापानि नाशमायान्त्यशेषतः ।।१।।

व्यासः –

'प्रातस्स्मरामि भवभीतिमहार्तिशान्त्यै नारायणं गरुडवाहनमब्जनाभम् ।
ग्राहाभिभूतवरवारणमुक्तिहेतुं चक्रायुधं तरुणवारिजपत्रनेत्रम् ।।१।।

प्रातर्नमामि मनसा वचसा च मूर्ध्ना पादारविन्दयुगलं परमेश्वरस्य ।
नारायणस्य नरकार्णवतारणस्य पारायणप्रवणविप्रपरायणस्य ।।२।।

प्रातर्भजामि भजतामभयङ्करं तं प्राक्सप्तजन्मकृतपापभयापहत्यै ।
यो ग्राहवक्त्रपतिताङ्घ्रिगजेन्द्रतीव्रशोकप्रणाशमकरोद्धृतशङ्खचक्रः ।।३।।

श्लोकत्रयमिदं पुण्यं प्रातःकाले पठेन्नरः ।
लोकत्रयगुरुस्तस्मै दद्यादात्मपदं हरिः' इति ।।

तदनन्तरं देवगृहस्य सम्मार्जनलेपनादिकं कुर्वन्नेव गजेन्द्रमोक्षादिकं पठेत् । तयोर्महाफलसाधनत्वश्रवणात् । यथोक्तं विष्णुधर्मोत्तरे –

यस्सदायतने विष्णोः कुरुते मार्जनक्रियाः ।
सपांसुभूतदेहश्च सर्वपापं व्यपोहति ।।१।।

यावत्यः पांसुकणिका मार्जने केशवालये ।
वर्षाणि दिवि तावन्ति तिष्ठत्यस्तमलो नरः ।।२।।

शनैस्सम्मार्जनं कुर्यान्मार्जन्या मृदुकूर्चया ।
पश्यन्परिहरञ्जन्तूश्चान्द्रायणफलं लभेत् ।।३।।

स्वयं गोमयमादाय स्थाने वा पतितं द्विजः ।
उपर्यधश्च सन्त्यज्य प्रत्यग्रं जन्तुवर्जितम् ॥४॥

श्रीमत्यायतने विष्णोर्यः कुर्यादुपलेपनम् ।
अग्निष्टोमं तु पक्षेण वाजपेयं तु मासतः ।
संवत्सरेणाश्वमेधं समाप्नोत्यनुलेपनात् '॥ इति ।

## गुरुवन्दनम्

तदनन्तरं गुरुवन्दनम् । वसिष्ठः –

ब्राह्मे मुहूर्ते चोत्थाय मुखं प्रक्षाल्य वाग्यतः ।
आचम्य प्रयतो भूत्वा ध्यायेद्विष्णुमतन्द्रितः ।
स्तुत्वा स्तोत्रैश्च देवेशं स्मरेद्गुरुपरम्पराम् ॥ इति ।
स्वान्गुरून्मनसा ध्यात्वा प्रणमेच्च पुनः पुनः ।

गुरवश्चाभियुक्तैः सङ्गृहीताः ।

विष्णुश्रीब्रह्मवाणीशवीशोमेन्द्रा मनुर्गुरुः ।
प्रवहस्सूर्यवरुणनारदाग्निवसिष्ठकाः ।

मित्रो विघ्नेश्वरश्चैव ।
स्वाहा बुधोऽषाशनयः पुष्कराजानदेवताः ।
मनुष्योत्तमपर्यन्ताः प्रीयन्तां गुरवो मम ॥ इति ।

गुरुपरमगुर्वादिपरम्पराप्रतिपादका मामका श्लोकाश्च -

श्रीमध्वराजं गुरुमाद्यमीडे श्रीपद्मनाभं नृहरिं तथैव ।
श्रीमाधवाक्षोभ्ययतीन्द्रवर्यौ टीकाकृतं श्रीजयतीर्थराजम् ।
विद्याधिराजं च कवीशतीर्थं वागीशतीर्थं त्वथ रामचन्द्रम् ।
विद्यानिधीन्द्रं रघुनाथतीर्थं रघ्वादिवर्यं च रघूत्तमं च ॥२॥

वेदव्यासं चैव विद्यापतिं च विद्याधीशं वेदनिध्याह्वयं च ।
सत्यव्रतं सत्यनिधिं च सत्यानन्दं च वन्दे गुरुवृन्दमित्थम् ।

कृपाकराऽशेषनुतेति गौरवी परम्परा किङ्करशङ्करी तरी ।
अपारसंसारकुसागरस्य मां परं हि पारं गमयेत् प्रसादतः ।।४।।

तदनन्तरं

'ब्रह्मान्ताः गुरवस्साक्षादिष्टं दैवं श्रियः पतिः ।
आचार्याः श्रीमदाचार्यास्सन्तु मे जन्मजन्मनि ।। इति प्रार्थयेत् ।

'नमोऽस्तु तात्त्विका देवा विष्णुभक्तिपरायणाः ।
धर्ममार्गे प्रेरयन्तु भवन्तस्सर्व एव हि ।।'

इति तत्त्वाभिमानिदेवान् प्रार्थयेत् । तदनन्तरं तुलसीं गां च प्रणमेत् ।

**कर्मसङ्कल्पाः**

त्रैलोक्यचैतन्यमयादिदेव श्रीनाथ विष्णो भवदाज्ञयैव ।
प्रातस्समुत्थाय तव प्रियार्थं संसारयात्रामनुवर्तयिष्ये ।।

संसारयात्रामनुवर्तमानस्त्वदाज्ञया श्रीनृहरे नरात्मन् ।
जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः ।
कृष्णेन देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि ।
प्रातःप्रभृति सायान्तं सायादिप्रातरन्ततः ।
यत्करोमि जगन्नाथ तदस्तु तव पूजनम् ।
स्वामी त्वं नृहरे तवानुचरणाः प्राणाश्शरीरं गृहं
पूजा ते विषयोपभोगरचना सम्यक्समाधिस्थितिः ।
सञ्चारः पदयोः प्रदक्षिणविधिस्तोत्राणि सर्वा गिरो
यद्यत्कर्म करोमि तत्तु सकलं विष्णो तवाराधनम् ।।

इति शरीरचेष्टानां भगवत्प्रीत्यर्थप्रार्थना ।

हेमाद्रौ मोक्षखण्डे –

ब्राह्मे मुहूर्ते चोत्थाय धर्ममर्थं च चिन्तयेत् ।
कायक्लेशं तदुद्भूतं ध्यायीत मनसेश्वरम् ।

व्राह्मे मुहूर्ते चोत्थाय मनसा ईश्वरं ध्यायीतेत्यन्वयः । तत उत्तरत्र करिष्यमाणं धर्ममर्थं च विष्णुपूजेतिकर्तव्यत्वेन चिन्तयेत् । तदुद्भूतं कायक्लेशं च चिन्तयेत् । तदुद्भूतं धर्मार्थयें उद्भूतम् । धर्मादिहेतुमिति यावत् । तेभ्यो देहादिभ्यः उद्भूतं वा तदुद्भूतमिति । कायक्लेशव्यापारम् । तेनायमर्थः– श्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थं स्मृतिविहितमेव देहादिसाध्यमेव स्वयोग्य-धर्मादिसाधनमेव कायादिव्यापारं करिष्ये इति व्राह्मे मुहूर्ते उत्तरत्र कार्याणि कर्माणि विष्णुपुरतः सङ्कल्पयेदिति ।

**भूमिप्रार्थनम्**

प्रयोगपारिजाते –

समुद्रवसने देवि पर्वतस्तनमण्डिते ।
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे

**दर्शनीयम्**

कराग्रे वसते लक्ष्मीः करमूले सरस्वती ।
करमध्ये तु गोविन्दः प्रभाते करदर्शनम् ।

विष्णुः

श्रोत्रियं सुभगामग्निं गामृषिं धार्मिकं नदीम् ।
प्रातरुत्थाय यः पश्येत्स आपद्भ्यः प्रमुच्यते । इति ।

एवं प्रातस्स्मरणं समाप्य देवाय नीराजनं कृत्वा नृत्यगीतादि विधाय प्रातस्स्मरणात्पूर्वमेव कृतशौचदन्तधावनादिश्चेत् स्नानार्थमेव वहिर्गच्छेत् । यदि चाकृतशौचादिः, तदा शौचार्थं वहिर्गत्वा यथाविधि शौचदन्त-धावनाचमनादि कृत्वा विध्यनुसारेण स्नानं कृत्वा ऊर्ध्वपुण्ड्राणि धृत्वा अर्घ्यप्रदानपर्यन्तं प्रातस्सन्ध्यां कृत्वा अनन्तरमेव व्रह्मयज्ञतर्पणं कार्यं, तथा आह्निकतरङ्गादौ समर्थितम् । तदेवास्माभिः व्रह्मयज्ञपद्धतौ विवृतमिति ।

सालिग्रामशिलातीर्थयुक्तेनैव जलेन हि ।
देवादितर्पणं कुर्यादन्यथा निष्फलं भवेत् ।। इति व्यासवचनात् ।

## निर्माल्यविसर्जनम्

तच्च तीर्थं निर्माल्यविसर्जने सत्येव भवतीति तदवश्यं कार्यम् । न केवलं ब्रह्मयज्ञतर्पणार्थमेव तदवश्यं कार्यम्, किन्तु अरुणोदयकालातिक्रमे महाप्रत्यवायस्मरणाच्च । यथोक्तं -

'अरुणोदयवेलायां निर्माल्यं शल्यतां व्रजेत् ।
प्रातस्तु स्यान्महाशल्यं घटिकामात्रयोगतः ।।

अतिशल्यं विजानीयात्ततो वज्रप्रहारवत् ।
अरुणोदयवेलायां शल्यं तत्क्षमते हरिः ।।

घटिकाया अतिक्रान्तौ क्षुद्रपातकमावहेत् ।
मुहूर्ते समतिक्रान्ते पूर्णपातकमुच्यते ।।

ततः किल ब्रह्मवधः महापातकपञ्चकम् ।
प्रहरे पूर्णतां याते प्रायश्चित्तं ततो न हि ।।

निर्माल्यस्य विलम्बे तु प्रायश्चित्तमथोच्यते ।
अतिक्रान्तमुहूर्तार्धे सहस्रं जपमाचरेत् ।।

पूर्णे मुहूर्ते सञ्जाते सहस्रं सार्धमुच्यते ।
सहस्रत्रितयं कुर्याद्घटिकानां चतुष्टये ।।

मुहूर्तत्रितयेऽतीते चायुतं जपमाचरेत् ।
प्रहरे पूर्णतां याते प्रायश्चित्तं न विद्यते ।।' इति ।

निर्माल्यविसर्जनस्य फलमाह अत्रिः –

'यः प्रातरुत्थाय विधाय नित्यं निर्माल्यमीशस्य निराकरोति ।
न तस्य दुःखं न दरिद्रता च नाकालमृत्युर्न च रोगमात्रम् ।' इति ।

नित्यमर्घ्यान्तं प्रातस्सन्ध्यावन्दनं विधायेत्यर्थः । निर्माल्यविसर्जनप्रकारस्तु पञ्चरात्रे एव निरूपितः ।

'अङ्गुष्ठतर्जन्यग्राभ्यां निर्माल्यमपनोदयेत् ।' इति ।

निर्माल्यविसर्जनात्पूर्वं शङ्खोदकेन देवाय अर्घ्यं पाद्यमाचमनीयं मधुपर्कं पुनराचमनं चेति पञ्चोपचारान्समर्प्य निर्माल्यं विसर्जयेत् । तथैवानुष्ठानमुक्तं मध्वविजये –

'विपुलहृदयपार्श्वे दीपदीप्तिप्रदीप्ते
दरवरपरिपूर्णैर्वार्भिरर्घ्यादि दत्वा ।
यतिरतियतचेताश्चक्रिणोऽर्चानिकायात्
कुसुमसमितिमग्र्यामादरादुज्जहार ।।' इति ।

अर्घ्यादीति अर्घ्यं पाद्याचमनादीति तट्टिप्पणीकाराः । तत्र आदिपदेन मधुपर्कपुनराचमनयोः परिग्रह इत्याभाति । तत्र पञ्चोपचाराणां विषये सहस्रशीर्षेत्यादिऋक्पञ्चकमेव मन्त्रः । निर्माल्यविसर्जने मन्त्रस्तु 'अहं रुद्रेभिः'(ऋ.सं.१०–१२५) इति लक्ष्मीसूक्तम् ।

'मा बिभेर्न मरिष्यसि परि त्वेषामिति सर्वतः ।
घनेन हन्मि वृश्चिक महादण्डेनागतम् ।।'

'आदित्यरथवेगेन विष्णोर्बाहुबलेन च ।
गरुडपक्षनिपातेन भूमिं गच्छ महायशाः ।।

गरुडस्य जातमात्रेण त्रयो लोकाः प्रकम्पिताः ।
प्रकम्पिता मही सर्वा सशैलवनकानना ।'

इति गरुडमन्त्रश्च सम्प्रदायप्राप्यो ज्ञेयः ।

तच्च निर्माल्यं रुद्रो देववामभागे स्वशिरसि पात्रे स्थाप्य बिभर्तीत्यनुसन्धाय देववामभागे कस्मिंश्चित्पात्रे स्थापयेत् । निर्माल्यविसर्जनानन्तरं पुरुषसूक्तस्य षष्ठ्या तृचा अभिषेकं कृत्वा अवशिष्टेन ऋग्दशकेन पूर्वजातात्

अर्घ्यं पाद्याचमनख्योपचारषट्कात् अवशिष्टाः वस्त्र विभूषण उपवीत आसन गन्ध पुष्प धूप धीप नैवेद्यनमनाख्या दशोपचारा अपि समर्पणीयाः । षोडशोपचारसङ्ग्रहस्तूक्तः ।

अर्घ्यं पाद्यं चाचमनं मधुपर्कं तथैव च ।
पुनराचमनं स्नानं वसनं भूषणं तथा ।।

उपवीतासने गन्धपुष्पे वै धूपदीपके ।
नैवेद्यं नमनं चेति उपचारास्तु षोडश ।।

अत्र गन्धशब्देन लक्षणया अक्षतानामपि लाभः । पुष्पशब्देन मन्त्रपुष्पस्य तुलस्यादीनां च लाभः । धूपशब्देन पुनर्धूपस्यापि शक्त्यैव लाभः । दीपशब्देन तथैव महानीराजनस्यापि । नमनशब्देन लक्षणया प्रदक्षिणानामपीति नाक्षतादीनां पृथगर्पणीयत्वेऽपि प्रमाणोक्तषोडशत्वभङ्ग इत्यवधेयम् । ततः शुद्धोदकेनैव सङ्क्षिप्य मुख्यप्राणादीनामभिषेकं कुर्यात् । विस्तरेण वायुस्तुत्यादिना अभिषेके होमादिविलम्बापातात् । विस्तरेण कर्तव्यं चेत् होमाद्यनन्तरं वा कार्यम् । ततः तीर्थगन्धनिर्माल्यैः मुख्यप्राणादीन्सम्पूज्य यस्य स्मृत्या चेत्युक्त्वा अनेन निर्माल्य विसर्जनाख्यकर्मणा मुख्यप्राणपतिः श्रीलक्ष्मीनारायणः प्रीयतां प्रीतो भवतु इति वदेत् ।

तदनन्तरं तीर्थेनैव ब्रह्मयज्ञतर्पणं कुर्यात् । तत्प्रकारस्तु अस्मत्कृत-ब्रह्मयज्ञतर्पणपद्धतौ द्रष्टव्यः ।

ततः तत्त्वन्यासमातृकान्यासौ वक्ष्यमाणप्रकारेण कृत्वा विश्वामित्र-गायत्रीमन्त्रं दशतारकयुक्तगायत्र्या त्रिवारं प्राणायामं कृत्वा 'ध्येयस्सदा' इत्यादिना ध्यानं च कृत्वा

सहस्रपरमां देवीं शतमध्यां दशावराम् ।(सदा.स्मृ.८)

इत्युक्तसङ्ख्यामध्ये यथाशक्ति जप्त्वा पुनः प्राणायामन्यासध्यानानि कृत्वा समापयेत् । अनन्तरमेव हंसमन्त्रजपं कृत्वा अष्टौ महामन्त्रान् जपेत् ।

तत्रापि नारायणाष्टाक्षरमन्त्रं गायत्रीत्रिगुणं अन्यांश्च मन्त्रान् यथाशक्ति जप्त्वा रामकृष्णव्यासमन्त्रादीनपि यथाशक्ति जप्त्वा पुनस्तत्त्वन्यासमातृकान्यासौ विधाय प्रातस्सन्ध्योपस्थानं कृत्वा 'यस्य स्मृत्या' इति विष्णौ समर्प्य प्रातरौपासनं कृत्वा ध्यानं कुर्यात् ।

## पद्ममालानुसारिणी पूजाविधिः

### ध्यानविधिः

अथ ध्यानप्रकारः ।

अष्टपत्रे तु हृत्पद्मे मध्ये सूर्येन्दुवह्निगम् ।
पीठं तन्मध्यपद्मस्थनारायणमनामयम् ॥

उद्यदादित्यसङ्काशं तेजसानुपमं सदा ।
सहस्रेणापि सूर्याणां सज्ज्ञानानन्दरूपिणम् ॥

अतिरक्ततलं भास्वन्नखव्रातविभूषितम् ।
वृत्तजङ्घं वृत्तजानुहस्तिहस्तोरुमीश्वरम् ॥

महाकटितटानद्धकाञ्चीपीताम्बरोज्ज्वलम् ।
निम्ननाभिं च त्रिवलिसंवृतोदरबन्धनम् ॥

विस्तारिवक्षसं भ्राजत्कौस्तुभामुक्तकन्धरम् ।
वनमालाधरं हारवैजयन्त्यादिभिर्वृतम् ॥

पृथुदीर्घचतुर्बाहुं शङ्खचक्रगदाम्बुजैः ।
युक्तमुन्निद्रपद्माक्षं स्फुरन्मकरकुण्डलम् ॥

पूर्णचन्द्रनिभोद्रिक्तकान्तिसन्मुखपङ्कजम् ।
सुभ्रुवं सुललाटं च कवरीबद्धमूर्धजम् ॥

निश्शेषदुःखशमनं नित्यानन्दं शुचिस्मितम् । यतिप्रणव. ७-१४
लक्ष्मीधराभ्यामाश्लिष्टं स्वमूर्तिगणमध्यगम् ॥

ब्रह्मवायुशिवाहीशविपेशक्रादिकैरपि ।
सेव्यमानं सदा भक्त्या ध्यायेन्नित्यं स्वशक्तिकम् ।। (तंत्र.सा.१.२०)

इति । प्रणवकल्पतन्त्रसारवाक्यानामयं समुदायार्थः । सन्ध्यामारभ्य ान्तमाह्निकं विधाय एकान्ते कुशाजिनवस्त्ररूपमृदुभूते आसने पद्मस्वस्तिक- ादिशारीरासनेनोपविश्य भूतोच्चाटनादि कृत्वा तत्त्वन्यासमातृकान्यासौ ाय ऊरुद्वयोपरि हस्तद्वयं कृत्वा हृदये श्रुतमननवान् स्वेष्टदेवताप्रतिमा- लोकयन् हृदये ध्यानाभ्यासं कुर्यात् । यथाशक्ति रेचकपूरककुम्भकक्रमेण ायामं कुर्यात् ।

तत्र हृदये अधोमुखहृत्कमलमष्टपत्रं 'यम्' इति वायुबीजेन अभिमुखं वा प्रणवेन ऊर्ध्वमुखाग्रयुक्तं कृत्वा तेनैव विकसितं भावयित्वा कर्णिकायां सूर्यमण्डलं तदुपरि चन्द्रमण्डलं तदुपरि त्रिकोणमग्निमण्डलं त्वा तज्ज्वालायां रमारूपश्वेतद्वीपं तत्र दिव्यरत्नमयं रमाख्यं मण्डपं येत् । एवमण्डपर्यन्तं ध्यात्वा मण्डपमध्ये चतुष्कोणं मनसा रचितं यरत्नखचितं सुवर्णमयपीठं निधाय तत्र पीठदेवताः परदेवताया आवाहयेत् । परदेवतामारभ्य अनैश्वर्याधिपतिरुद्रपर्यन्ताः षोडशदेवता एव पूज्याः । न परमपुरुषमारभ्य मण्डपपर्यन्ता दश देवता अपि । एवं ध्यातदेवतासहितं सा रचितं पीठं निधाय तन्मध्ये कन्दनालसहितषड्दलपद्मात्मिकायै श्रियै इति षड्दलपद्मस्य षट्सु दलेषु इत्यादिना वक्ष्यमाणप्रकारेण अवशिष्टपूजां ापयेत् । एवं ध्यात्वा तत्र स्वरूपहृदये स्वरूपाङ्गुष्ठपरिमितं बाह्यहृदये ाङ्गुष्ठपरिमितं तत्पृष्ठभागे हृत्कमलमध्यव्यापिनं प्रादेशपरिमितं तदधः- र्णिकामूले अङ्गुष्ठाग्रप्रमाणं च परमात्मानं 'लक्ष्मीधराभ्यामाश्लिष्ट' इत्यादि- त्रसारोक्तप्रकारेण आवरणदेवतासहितम् उद्यदादित्यवर्णं

अनन्तसूर्यदीधितिर्दुरन्तसद्गुणार्णवः ।
सहस्रसूर्यदीधितिज्वलत्किरीटमूर्धजः ।।

सुनीलकुन्तलावृतामितेन्दुकान्तिसन्मुखः ।
सुरक्तपद्मलोचनः सुविद्युदाभकुण्डलः ।।

सुहासविद्रुमाधरः समस्तवेदवाग्रसः ।
दिवाकरौघकौस्तुभप्रभासकोरुकन्धरः ।।

सुपीवरोन्नतोरसज्जगद्धरांसयुग्मकः ।
सुवृत्तदीर्घपीवरोल्लसद्भुजद्वयाङ्कितः ।।

उदारवाहुभूषणश्शुभाङ्गदस्सुकङ्कणः ।
महाङ्गुलीयभूषितः सुरक्तसत्कराम्वुजः ।।

अनर्घ्यरत्नमालया वनाख्यया च मालया ।
विलासविस्तृतोरसा वभार च श्रियं प्रभुः ।।

सभूतिवत्सभूषणः तनूदरे वलित्रयः ।
उदारमध्यभूषणोल्लसत्तटित्प्रभाम्वरः ।।

करीन्द्रसत्करोरुयुक्सुवृत्तजानुमण्डलः ।
क्रमाल्पवृत्तजङ्घकस्सुरक्तपादपल्लवः ।।
लसद्धरिन्मणिद्युती रराज राघवोऽधिकम् ।।

इति नवमाध्याये श्रीभारततात्पर्योक्तरीत्या वा ध्यायेत् । द्वात्रिंशल्लक्षणानि ध्येयानि ।

तथाहि भुजनेत्रहनुजानुनासास्थानेषु पञ्चदैर्घ्याणि । त्वक्केशाङ्गुलिदन्ताङ्गुलि-पर्वसु पञ्च सौक्ष्म्याणि । पाणिपादनेत्रान्तेषु तालुस्थाने जिह्वायां अधरोष्ठनखेषु सप्तस्थानेषु रक्तत्वानि । कक्षकुक्षिवक्षोघ्राणस्कन्धललाटेषु षट्सु स्थानेषु औन्नत्यम् । ललाटकटिवक्षस्सु त्रिषु स्थानेषु पृथुत्वादीनि । ग्रीवाप्रजननपृष्ठजङ्घेषु ह्रस्वत्वादीनि । स्वरस्वत्वनाभिषु त्रिषु स्थानेषु गम्भीरत्वादीनि । तथा चोक्तं लक्षणग्रन्थे ।

पञ्चदीर्घः पञ्चसूक्ष्मस्सप्तरक्तष्षडुन्नतः ।
त्रिपृथुर्लघु गम्भीरो द्वात्रिंशल्लक्षणानि च ।।

अत्र लघुशब्दो ह्रस्वार्थो ज्ञेयः । तथा दक्षिणकरयोः सहस्रारचक्रं अष्टास्रां गदां वामकरयोः शतावर्तशङ्खं सहस्रदलपद्मं च तल्लक्षणत्वेन ज्ञेयम् । पादपल्लवयोः वज्राङ्कुशध्वजरेखा ध्येयाः । यथोक्तं बृहद्भाष्ये –

'सहस्रारेण चक्रेण चिह्नितो दक्षिणे करे ।
गदयाष्टास्रया चैव शतावर्तेन कम्बुना ।।
वामे करे तथाब्जेन सहस्रदलशोभिता' ।। इति ।

भागवते –

'सञ्चिन्तयेद्भगवतश्चरणारविन्दं वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यम् ।
उत्तुङ्गरक्तविलसन्नखचक्रवालज्योत्स्नाभिराहतमहद्धृदयान्धकारम् ।।' इति।

हृदये ध्येयमूर्तयः तिस्र उक्ता बृहद्भाष्ये –

हृदये सर्वशो व्यापी प्रादेशः पुरुषोत्तमः ।
जीवानां स्थानमुद्दिष्टं सर्वदेव सनातनः ।।

हृत्कर्णिकामूलगतः सोऽङ्गुष्ठाग्रप्रमाणकः ।
मूलेश इति नामास्मिन् सर्वे जीवाः प्रतिष्ठिताः ।।

अङ्गुष्ठमात्रे पुरुषे कर्णिकाग्रस्थिते हरौ ।
प्रविशन्ति सुषुप्तौ च प्रबोधं च ततस्तथा ।।

अङ्गुष्ठमात्रः पुरुषः ।
'सोऽयं त्रिरूपो भगवान् हृदयाख्यः प्रकीर्तितः' इति ।

इदं यावत्कालं ध्यानवशात् हृदये वासनामयमूर्तिः प्रतीयते, तावत्कालं ध्यानाभ्यासं कुर्यात् ।

वासनामयमूर्तिप्रतीत्यनन्तरं तस्य अस्यां प्रतिमायां वासनामयैः अर्घ्यपाद्यआचमनमधुपर्कपुनराचमनस्नानवासोविभूषणोपवीतआसनगन्धपुष्पधूपदीप नैवेद्यनमस्काराख्यषोडशोपचारैः मनसा सङ्कल्पितैः, तादृशैरेव 'मुखवासश्च ताम्बूलं' इत्युक्तैः षट्संख्याकैरनूपचारैश्च पूजां कृत्वा तत्प्रतिमान्तर्गतविष्णोः पूर्णसच्चिदानन्दात्मकः सर्वस्वामी पूर्णगुणः इति ध्यानं कुर्यात् । इदं च यावत् स्वरूपाभिज्ञगुरुदर्शनं तावत्पर्यन्तं कुर्यात् । पश्चात् तादृशगुरूक्तप्रकारेण यावदपरोक्षं ध्यायेत् । ध्यानसमाप्त्यनन्तरं सम्पुटाकारेण तत्त्वन्यास-मातृकान्यासौ कृत्वा ध्यानं हरौ समर्पयेत् । आन्तरदीक्षा सर्वदा कार्या ।

'अयं सर्वेष्टदाता मे सर्वानिष्टनिवारकः ।
सर्वोत्कृष्टोऽयमेवैकः तदीयोऽहं स मे पतिः' इति ।

पूजायां अयं विशेषः ।

''सस्नुषा च हरेर्लक्ष्मीः स्नानं कारयति प्रभोः ।
पीताम्बरे च गरुडः आसने शेष उच्यते ।।

इन्द्रस्तु कलशे गोपीचन्दने मन्मथस्तथा ।
रुद्रस्तु शङ्खचक्रादेर्धारणाय जगत्पतेः ।।

आदर्शौ च ततो दद्यात्सूर्यचन्द्रौ रमापतेः ।
श्रीगन्धे तु श्रियं विद्यात् भूदेवीमक्षतान्स्मरेत् ।।

दुर्गामलङ्कारके विद्याद्वैजयन्त्यां सदाशिवम् ।
वायुं तु वनमालायां लक्ष्मीं श्रीवत्सके तथा ।।

पादुके तु मरुद्देवः कौस्तुभे तु विधिस्स्मृतः ।
चक्रे तु कटिसूत्रे च कुण्डले शेष उच्यते ।।

पूजाकाले तु देवस्य चेति ध्येयं हि चाञ्जसा'' इत्युक्तो ज्ञेयः ।

अथ ध्यानकाले विकसितस्यापि हृत्पद्मस्य ध्यानसमाप्त्यनन्तरं पुनर्मुकुलीभाव अङ्गीक्रियते एव । तेन आह्निकतरङ्गे पूजाप्रकरणे भगवन्मूर्तौ

भगवतः आवाहनाय 'अधोमुखं' इत्यादिना पुनर्विकसनोक्तेः कथं पूर्वं विकसितस्य पुनर्विकसनमिति शङ्का परास्तेति ज्ञेयम् । वासनामयषोडशोपचारपदार्थेषु तत्तदाकारतत्तन्नियामकतत्तन्नामकपरमात्मस्वरूपभूतान् चिदानन्दात्मकान् तथा रमास्वरूपभूतान् विरिञ्चादिस्वरूपभूतान् सर्वोपचारान् ध्यात्वा समर्पयेत् प्रत्येकं विम्वरूपिणे इति सम्प्रदायविदः ।

**महापूजा**

तदनन्तरं यथाशक्ति श्रीमद्ब्रह्मसूत्रभाष्यभगवद्गीतादिसच्छास्त्रव्याख्यानं विधाय श्रीमदाचार्यकृतसर्वमूलानां कांश्चित्कांश्चित्भागान् पठित्वा महापूजायै प्रथमम्ब्वयोदकाहरणं कार्यमित्युक्तं पद्यमालायां

**आदौ देवगृहे न्यस्य कलशान् सप्त पञ्च वा ।**

इति । एतत्प्रपञ्चस्तु कलशपूजाप्रकरणे पद्यमालायामेव वक्ष्यते इति अस्माभिरपि तत्रैव वक्ष्यते । तदनन्तरं

**तुलस्याहरणम्**

**अहरेत्तुलसीं दूर्वां पुष्पाण्यद्यतनानि च ।।**

तत्र यदा तुलस्यादेराहरणं तदैव पुष्पाणामपीति कालैक्यविधाने न तात्पर्यम् । किन्तु तदुभयाहरणमात्र एव । तथा च स्नात्वैव तुलस्यादेराहरणम्, पुष्पाणां तु स्नानात्पूर्वमेवाहरणम् । उभयत्र प्रमाणं तु तत्तत्समर्पणप्रकरणे वक्ष्यामः । तथा च स्वस्याशक्त्यादिना प्रातः स्नानाघटने प्रातरेव स्नातस्य पुत्रादेर्द्वारा तुलस्याहरणादिकं कार्यम् । तुलस्याहरणप्रकारस्तु

'प्रसीद मम देवेशि प्रसीद हरिवल्लभे ।
क्षीरोदमथनोद्भूते तुलसि त्वं प्रसीद मे ।।' इति मन्त्रेण प्रार्थयित्वा

'तुलस्यमृतजन्मासि सदा त्वं केशवप्रिये ।
केशवार्थं विचिनुवे वरदा भव सुव्रते ।।'

इति मन्त्रेण 'नखस्पर्शेन रहितं चिनुयाच्छुचिना स्वयम्' इत्युक्तरीत्या तुलस्याहरणमिति ज्ञेयम् ।

अत्र मूले दूर्वाणामपि आहरणं स्नात्वैव कार्यमिति आभाति । अत्र च येन स्नानेन तुलस्याहरणं तेनैव स्नानेन पूजा न कार्या ।

'इत्याहृत्य ततः स्नात्वा पूजयेत् पुरुषोत्तमम् ।
अस्नात्वा पूजयेद्यस्तु तस्य पूजा वृथा भवेत् ।।'

इति नारसिंहे पुनः स्नानेनैव पूजोक्तेरिति ज्ञेयम् ।

तत्र -

'भानुवारे भृगौ भौमे व्यतीपाते युगादिषु ।
नाहरेत् तुलसीपत्रं मध्याह्नोपरि वैधृतौ ।।

सङ्क्रान्ते पक्षयोरन्ते द्वादश्यां निशि सन्ध्ययोः ।
तुलसीं ये विचिन्वन्ति ते वै ब्रह्महणस्स्मृताः ।।'

इत्युक्तनिषिद्धदिवसा ज्ञेयाः ।

तदपवादोऽपि -

'निषिद्धदिवसे वापि चामावास्याहनि द्विजाः ।
तुलस्याहरणं शस्तं ममार्चायां तु शाण्डिले ।।' इति वचनात् ।

'देवार्थे तुलसीच्छेदे होमार्थे समिधस्तथा ।
इन्दुक्षये न दुष्येत गवार्थे तु तृणस्य च ।।' इति पाद्मवचनात् ।

'सङ्क्रात्यादिनिषेधस्तु परेषां परिकीर्तितः ।
क्वचिन्न तुलसीं छिन्द्याद् द्वादश्यामेव वैष्णवः ।।'

इति गारुडवचनाच्च ज्ञातव्यः ।

तुलस्याः पूजनमावश्यकमिति वक्ष्यते । पुष्पाण्ययतनानि च इत्युक्त्या पर्युषितानां निषेधं सूचयति ।

'वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलम् ।' इति वायुपुराणवचनात् ।

तुलस्यादेः पर्युषितत्वेऽपि दोषो नास्तीति । पुनः कीदृशानि पुष्पाणि इत्यत आह –

**यथाकालोपपन्नानि स्वारामवनजान्यपि(वनजानि च)।**
**अक्रीतान्यप्रदत्तानि चौर्याल्लब्धानि यानि च ।।**

**(शूद्राहृतानि वा भूमौ पतितानि तथैव च ।**
**एरण्डार्कजपत्रेषु चाहृतानि करे तथा ।।)**

**पटाहृतानि यानि स्युर्वर्जयेत्तानि यत्नतः ।**

एवं तुलसीपुष्पाण्याहृत्य अर्घ्यादिपात्रसम्भारान् यथाशक्ति निधाय च । यथाशक्तिसम्पादितान् अर्घ्यपात्रादिसम्भारान् शोधयित्वा देवस्य समीपे स्थापयित्वा माध्याह्निकस्नानाय नद्यादिकं प्रति गत्वा यथाविधि स्नात्वा माध्याह्निकीं सन्ध्यां विधाय अशक्त्यादिना प्रातः स्नानाघटनेन ब्रह्मयज्ञाकरणे तदानीमेव तत्रैव ब्रह्मयज्ञतर्पणं कृत्वा वैश्वदेवात्प्राक् तदन्ते वा कर्तुमवशिष्य वा प्रातस्स्नानेन अर्घ्योदकाहरणाघटने तदानीमेव वस्त्रशोधितजलं मूलमन्त्रेण सम्पूर्य वस्त्रेण कलशमुखं पिधाय दक्षिणहस्ते मस्तके वा धृत्वा गृहमागत्य अर्घ्योदकं शुद्धदेशे स्थापयेत् । अत्र अशक्तानामेकेनैव स्नानेन निर्वाह इति सूचयितुं मध्ये माध्याह्निकस्नानाद्यनुक्तिः पद्यमालायाम् । तथा चाचार्यग्रन्थः शक्ताशक्तबोधनाय प्रवृत्तः । एतच्च 'निर्माल्यं विसृजेत्ततः' इत्यत्र लेशतो दर्शयिष्यामः ।

तदनन्तरं किं कार्यमित्यत आह –

**(अर्घ्यपाद्यादिसम्भारान् यथाशक्ति विधाय च ।।)**

**प्रक्षाल्य पाणी पादौ चाप्याचम्य हरिवेश्मनः ।**
**उपद्वारं समागम्य भक्त्या कुर्याच्छ्रियै नमः ।।**

पूर्वे नमो जयायाथ विजयायाथ दक्षिणे ।
श्रियै बलाय प्रबलायाथ प्रत्यक् श्रियै नमः ॥

नन्दायाथ(य च) सुनंदाय श्रियै च कुमुदाय च ।
कुमुदाक्षायोत्तरे च द्वारपालांश्च पूजयेत् ॥

तदनुज्ञामवाप्याथ वायवा याहि दर्शते ।
अनेन वायुमंत्रेण समुद्धाट्य कवाटकम् ॥

कृत्वा तालत्रयं द्वारे देहलीमस्पृशन् विशेत् ।
दक्षिणाङ्घिं पुरस्कृत्य ह्यग्निनाग्निः समिध्यते ॥

(अनेन वह्निमन्त्रेण दीपानुद्दीपयेत्ततः ।)
ईक्षया पुष्पक्षेपेण पार्ष्णिघातत्रयेण च ॥

दिव्यन्तरिक्षभूमिष्ठान् विघ्नानुचाटयेत् सुधीः ।
अपसर्पन्तु ये भूता इति मंत्रं पठन्नपि ॥

भूतानुचाट्य नाराचमुद्रया बंधयेद्दिशः ।

**द्वारपालनमनम्**

पाणी पादौ च प्रक्षाल्य द्विराचम्य देवालयसमीपं गत्वा श्रियं नमेत् ।

तत्क्रमः –
पूर्वद्वारे श्रियैं नमः । जयाय नमः । विजयाय नमः ।
दक्षिणद्वारे श्रियैं नमः । बलाय नमः । प्रबलाय नमः ।
पश्चिमद्वारे श्रियैं नमः । नन्दाय नमः । सुनन्दाय नमः ।
उत्तरद्वारे श्रियैं नमः । कुमुदाय नमः । कुमुदाक्षाय नमः ।
इति द्वारपालान्नत्वा तदनुज्ञामवाप्य,

*वायवेत्यस्य मन्त्रस्य मधुच्छन्दः ऐन्द्र वायवीगायत्रीदेवता देवगृहस्य कवाटोद्घाटने विनियोगः*

वायवा याहि दर्शते मे सोमा अरंकृताः ।
तेषां पाहि श्रुधी हवम् । (ऋ.सं.१-२-१)

इति मन्त्रेण कवाटमुद्धाट्य 'वन्दे विष्णुं नमामि' इत्यादिना विप्रऋष्यादि-सर्वदेवान्नत्वा

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ।।

इत्युक्त्वा तालत्रयं कृत्वा देहलीमस्पृशन्नेव दक्षिणाङ्घ्रिपुरस्सरं

यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ।।(म.ना.उ)

इति मन्त्रं पठन्नेव देवगृहं प्रविशेत् । ततः,

**दीपप्रज्वालनम्**

*अग्निनाग्निरित्यस्य काण्वो मेधातिथिः अग्निर्गायत्री दीपप्रज्वालने विनियोगः ।*

अग्निनाग्निस्समिध्यते कविर्गृहपतिर्युवा ।
हव्यवाड् जुह्वास्यः (ऋ.सं.१-१२-६)

इति मन्त्रेण दीपमुद्दीप्य ईक्षया दिविस्थान् विघ्नान् उच्चाटयेत् ।

अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ।

इति मन्त्रेण तालत्रयं कुर्वन् भूतानुच्चाटयेत् । ततो नाराचमुद्रया दिग्बन्धनं कृत्वा सर्वविघ्ननिवारणार्थं 'पान्त्वस्मान्' इति श्लोकद्वयं पठेत् ।

### विस्तरेण द्वारपालनमनम्

उपद्वारम्– द्वारसमीपम् । भक्त्येत्यतः पूर्वं पूर्वे इत्यनुषज्यते । पूर्वदिग्भागे पूर्वदिग्भागस्य प्रथमद्वारस्थितायै श्रियै नमः कुर्यात् । तदनन्तरं पूर्वदिग्भागस्थितचतुर्थद्वारे स्थिताय जयाय विजयाय च नमः कुर्यादित्यर्थः । यद्यप्यत्र एकस्यामेकस्यां दिशि चत्वारि चत्वारि द्वाराणि सन्तीति दिक्चतुष्टयं मिलित्वा षोडशद्वाराणि भवन्ति । तत्र पूर्वस्यां दिशि प्रथमद्वारे श्रीर्वर्तते । द्वितीयद्वारे द्युशब्दवाच्या भारती, तृतीये सूर्यः प्राणः चक्षु इति रूपत्रयेण सूर्यो वर्तते । चतुर्थे तु जयविजयौ । एवं दक्षिणदिशि प्रथमद्वारे श्रीः । द्वितीयद्वारे दिक्शब्दवाच्या भारती । तृतीये सोमः व्यानः श्रोत्रं इति रूपत्रयेण चन्द्रः । चतुर्थे बलप्रबलौ । प्रतीच्यां तु प्रथमद्वारे श्रीः । द्वितीयद्वारे पृथिवीशब्दवाच्या भारती । तृतीयद्वारे अग्निः अपानः वाक् इति रूपत्रयेण अग्निः । चतुर्थे नन्दसुनन्दौ । उदीच्यां तु प्रथमद्वारे श्रीः । द्वितीये विद्युच्छब्दवाच्या भारती । तृतीये इन्द्रः समानः मनः इति रूपत्रयेण इन्द्रः । चतुर्थे तु कुमुदकुमुदाक्षौ । तथा च षोडशद्वारदेवतानां सर्वासामपि नमस्कारो वक्तव्यः । तथापि दिक्चतुष्टयगतप्रथमचतुर्थद्वारगत-देवतानमस्कारेण मध्यमद्वारद्वयगतदेवता नमस्कारस्य कृतप्रायत्वमिति मत्वा प्रथम चतुर्थद्वारगतदेवतामात्रनमस्कारः प्रदर्शित इति ज्ञेयम् ।

### दिग्बन्धनम्

'भूतानुचाट्य नाराचमुद्रया बन्धयेद्दिशः' इत्यत्र भूतोच्चाटनान्तरं दिग्बन्धनोक्त्या 'दिशो बध्नेषु मुद्रया । च्छोटिकामुद्रया कुर्याद् भूतोच्चाटनमप्युत' इति दिग्बन्धानन्तरं भूतोच्चाटनं कार्यमिति केषाञ्चित्परपक्षो न समञ्जस इत्युक्तं भवति । तथा सति तेषां बहिर्गमनस्य मार्गाभावेन अन्तरेव सञ्चारापत्त्या कृतस्याप्युच्चाटनस्य अकृतप्रायत्वप्रसङ्गात् । भूतोच्चाटनान्तरं दिग्बन्धनं तु बहिर्निष्कृतानां पुनरन्तःप्रवेशाभावेन नोक्तानुपपत्तिरिति ध्येयम् ।

## देवप्रार्थना

ततः -

वेदिकायाः अधः स्थित्वा देवस्याभिमुखेऽर्चकः ।
कृताञ्जलिपुटो भूत्वा विनयानतकन्धरः ।।

इत्युक्तेः विनयपूर्वकं बद्धाञ्जलिः सन् वेदिकायाः अधः स्थित्वा

लक्ष्मीकान्त नमस्तेऽस्तु स्वामिन्भीतो भवाम्बुधेः ।
पूजयाम्यहमद्य त्वां प्रसीद पुरुषोत्तम ।

त्वामेव शरणं यामि शरणागतवत्सल ।
कुरुष्व सफलां पूजां पूजार्हं मां च माधव ।।

इति मन्त्राभ्यां देवं सम्प्रार्थ्य

कायिकान्वाचिकान्दोषान्मानसानपि सर्वदा ।
वैष्णवद्वेषहेतून्मे भस्मसात्कुरु माधव ।।

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।
तानि सर्वाणि मे देव क्षमस्व मधुसूदन ।।

इति देवाय स्वदोषं विज्ञाप्य क्षमां प्रार्थयेत् ।

## मानुषगन्धनिवारणम्

**अपैवेत्यादि येभ्यश्च ये(ए)वा पित्र(त्यृचं) ऋचौ पठेत्**
**।।१३।।**

**निवार्य मानुषं गन्धमेभिर्मन्त्रैस्तु पूजकः ।**

'अपैवावीभत्सन्त मनुष्यगन्धास्त एतेधाय्ये अन्तरदधत येभ्यो माता ये वा पित्रे' इति ब्राह्मणोक्तक्रमेण मनुष्यशरीरदुर्गन्धपरिहारान्तःकरणनैर्मल्ययोः साधकः ऋग्द्वयं पठेत् ।

*येभ्यो मातेत्यस्य गयःप्रात ऋषिः विश्वेदेवा देवताः जगती छन्दः मनुष्यगन्धनिर्हरणार्थे जपे विनियोगः ।*

येभ्यो माता मधुमत्पिन्वते पयः पीयूषं द्यौरदितिरद्रिवर्हाः ।
उक्थशुष्मान्वृषभरान् त्स्वप्नसस्ताँ आदित्याँ अनु मदा स्वस्तये ।
(ऋ.सं.१०–६३–३)

*एवापित्रे इत्यस्य गृत्समद ऋषिः वृहस्पतिर्देवता त्रिष्टुप् छन्दः अन्तःकरणनैर्मल्यार्थे जपे विनियोगः ।*

एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ।
वृहस्पते सुप्रजा वीरवन्तो वयं स्याम पतयो रयीणाम् ।
(ऋ.सं.४–५०–६)

इति । ऋग्द्वयार्थस्तु , माता–जननी । द्यौः – दीप्यमाना । अद्रिवर्हा – अद्रिवत् वर्हः केशवन्धो यस्याः सा । पूजार्थं वहुवचनम् । अनुमदा – पूर्णसुखा । एवम्भूता अदितिः येभ्यो देवेभ्यः पीयूषममृतरूपम् । अत एव मधुमत् सरसं पयः– स्तन्यं पाययति । तानादित्यान् अदितिपुत्रान् देवान् स्वस्तये सुखाय स्तौमि । इति पूर्वेणान्वयः । पित्रे – लोकपालाय । विश्वदेवाय – पूर्णदेवाय । वृष्णे – भक्ताभिलषितसेचकान् । यज्ञैः– नमस्कारेण । हविर्भिश्च विधेमैव –भवेमैव । न तु न भवाम इति प्रार्थनेति ।

**कल्पयित्वा जवनिकां देवमात्मानमन्तरा ।**
**आरुह्य वेदिकां पश्चात् ब्रह्मपारस्तवं पठेत् ।।**

अत्र वेदव्यासतीर्थश्रीमच्चरणैः कूर्मासनादावुपविशेदिति शेषपूरणं कृतम् । युक्तं चैतत् । उत्तरत्र 'निर्माल्यं विसृजेत्ततः' इत्यादिना पूजाप्रकरणे तस्य वक्ष्यमाणत्वेन तिष्ठतस्तस्य निषिद्धत्वेनायोगात् ।

ततो देवमात्मानमन्तरा जवनिकां कृत्वा ब्रह्मपारस्तोत्रं पठन् वेदिकामारुह्य कूर्मासनादावुपविशेत् । तच्चेत्थम् –

प्रचेतस ऊचुः –

ब्रह्मपारं मुने श्रोतुमिच्छामः परमं स्तवम् ।
जपता कण्डुना देवो येनाराध्यत केशवः ॥१॥

सोम उवाच –

पारः परं विष्णुरनन्तपारः परः पराणामपि पारपारः ।
स ब्रह्मपारः परपारभूतः परः परेभ्यः परमार्थरूपी ॥२॥

स कारणं कारणतस्ततोऽपि तस्यापि हेतुः परहेतुहेतुः ।
कार्येषु चैवं स हि कर्मकर्तृरूपैरशेषैरवतीह सर्वम् ॥३॥

ब्रह्मप्रभुर्ब्रह्म स सर्वभूतो ब्रह्मप्रजानां पतिरच्युतोऽसौ ।
ब्रह्माव्ययं नित्यमजं स विष्णुरपेक्षयाऽऽद्यैरखिलैरसङ्गी ॥४॥

ब्रह्माक्षरमजं नित्यं यथाऽसौ पुरुषोत्तमः ।
तथा रागादयो दोषाः प्रयान्तु प्रशमं मम ॥५॥

एवं वै ब्रह्मपाराख्यं संस्तवं परमं जपन् ।
अवाप परमां सिद्धिं स समाराध्य केशवम् ॥६॥

**घण्टाकिरीटदण्डेषु स्वरे नादे क्रमेण तु ।**
**ब्रह्माणं गरुडं नागं वाग्देवीं च प्रजापतिम् ॥**

इति वचनानुसारेण घण्टादिस्थानपञ्चके ब्रह्मादिदेवतापञ्चकमावाह्य

आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् ।
कुरु घण्टारवं तत्र देवताह्वानलाञ्छनम् ॥

अज्ञानाज्ज्ञानतो वापि कांस्यघण्टां न वादयेत् ।
राक्षसानां पिशाचानां तद्देशे वसतिर्भवेत् ॥

तस्मात्सर्वप्रयत्नेन घण्टामाचाल्य वादयेत् ।

न वादयेत् इत्यतः पूर्वं यदीति शेषः ।

**निर्माल्यविसर्जनम्**

**ततो जवनिकां त्यक्त्वा निर्माल्यं विसृजेत्ततः ।**

नन्वरुणोदयकाल एव निर्माल्यविसर्जनस्य कर्तव्यत्वसमर्थनात् तत एव मध्याह्ने तस्याकर्तव्यत्वावगमात् कथमेतद्विधानमत्रेति चेत् – येन अशक्त्यादिना निमित्तेन अरुणोदयकाले प्रातःकाले वा स्नानं न कृतं, पुत्रादीन् संप्राप्य निर्माल्यविसर्जनादिकं च न कारितं, किन्तु 'मन्त्रस्नानं प्रकर्तव्यं सन्ध्योपासनसिद्धये' इति यदा वाराहोक्तगौणपक्षमाश्रित्य प्रातस्सन्ध्याहोमयोः साधनया मन्त्रस्नानमेव कृतम्, तेनैव मन्त्रस्नानेन प्रातरौपासनाद्ययोदक-तुलस्याहरणादिकं कृतम्, तदा निर्माल्यविसर्जनासम्भवात् मध्याह्ने स्नानं कृत्वा सन्ध्यावन्दनजपानुष्ठानादिकं कृत्वा द्वारपालनमनमारभ्य एतावत् पर्यन्तमाह्निकं कृत्वैव निर्माल्यविसर्जनं कार्यम् । अर्घ्यप्रदानान्तरमेव ब्रह्मयज्ञार्थं निर्माल्यविसर्जनविधायकवाक्यानां अरुणोदयकालमात्रविषयकत्वेन मध्याह्न-विषयकत्वाभावेन मध्याह्ने पूजाद्यनुष्ठानानन्तरमपि निर्माल्यविसर्जनोपपत्तेः । ब्रह्मयज्ञतर्पणस्य प्रातस्स्नानाद्याह्निकाशक्तेन मध्याह्ने एव वैश्वदेवात्प्राक् तदन्ते वा कर्तुं शक्यत्वात् । न च अर्घ्यप्रदानानन्तरं निर्माल्यविसर्जनविधायक-वाक्यानां नार्घ्यप्रदानानन्तरमेव ब्रह्मयज्ञविधान-मात्रार्थत्वं, किन्तु 'घटिकाया अतिक्रान्तौ क्षुद्रपातकमुच्यते' इत्यादिना घटिकायतिक्रमेण क्षुद्रपातकायुक्तेः तत्परिहारार्थत्वमपीति कथं मध्याह्ने निर्माल्यविसर्जनविधानमत्र सम्भवति ।

प्रहरे पूर्णतां याते प्रायश्चित्तं ततो न हि ।

इति स्मरणात् मध्याह्ने सुतरां प्रायश्चित्तरहितपापापातादिति वाच्यम् । शुद्धस्नानादिष्वशक्तान्प्रति मन्त्रस्नानविधीनामिव एतद्विधेरपि प्रवृत्तिसम्भवात् । येन समर्थेन अरुणोदयस्नानमारभ्य ध्यानप्रवचनान्तमखिलमाह्निकमनुष्ठितं, तं प्रति प्रातःकाले समर्पितं यत्तुलस्यादिकं निर्माल्यं तदपसार्य, रुद्रः देवस्य वामभागे स्वशिरसि पात्रं धृत्वा तिष्ठति इत्यनुसन्धाय देववामभागस्थपात्र-

विशेषे स्थापयेदिति विधानार्थं प्रवृत्तमिदं वचनमित्याहुः । वस्तुतस्तु नास्य मूलस्य सालिग्रमशिलानिर्माल्यविसर्जनविधाने तात्पर्यम् । तस्य प्रागेव विसर्जितत्वात् । किं नाम प्रतिमागतनिर्माल्यविसर्जने । अत एव एतादृशं निर्माल्यविसर्जनं कार्यमित्यभिप्रेत्य अह्निकतरङ्गे प्रातःकालीन-देवपूजां कृत्वा इति प्रातराह्निकप्रदर्शनवेलायामभिधाय माध्याह्निकमहा-पूजाविधानसमये अहं रुद्रेति निर्माल्यविसर्जनं कृत्वेत्यभिहितम् । आयी सत्यनाथाचार्यैरपि स्वपद्धतौ स्नानादि प्रातराह्निकं षोडशर्चपुरुषसूक्तेन प्रातरर्चां च कृत्वा इत्यादिना प्रातराह्निकमभिधाय ततो माध्याह्निकस्नानक्रियां कृत्वा इत्यादिना पूजाप्रकारनिरूपणसमये 'श्रीसूक्तं पठन्नेव निर्माल्यं विसृज्य निर्माल्यं देववामे वेणुपात्रे शिवं निक्षिपेत्' इत्युक्तम् ।

**स्नानपात्रं तथा पीठं यथास्थानं निधाय च ।।**

उपलक्षणमेतत् । पूजासाधनद्रव्याणि देवस्य दक्षिणभागे निधाय गण्डूपपात्रमपि देवस्य वामभागे निधाय पञ्चपात्राणि देवस्याग्रे निधाय स्वहस्तप्रक्षालनपात्रं स्वपृष्ठभागे निधाय पूजामारभेत् । तदुक्तम् –

देवस्य दक्षिणे भागे पूजकश्च स्थितो भवेत् ।
तथैवाघ्र्योदकं कुम्भं गन्धपुष्पादिपात्रकम् ।।

निर्माल्यानि च सर्वाणि देववामे च निक्षिपेत् ।
वामे गण्डूषपात्रं स्यादग्रे स्यात्पञ्चपात्रकम् ।।

पृष्ठदेशे पात्रमेकं स्वकरक्षालनाय च
एवं सम्भृतसम्भारस्ततः पूजां समारभेत् ।। इति ।।

**मण्डपध्यानम्**

**सौवर्णं मण्टपं ध्यायेद्धेमरत्नोपमण्डितम् ।।**

उत्तमोज्ज्वलकाञ्चनेन रचितं तुङ्गाङ्गरङ्गस्थलं
शुद्धस्फाटिकभित्तिकाविलसितैस्स्तम्भैश्च हैमैश्शुभैः ।

मुक्ताजालविलम्बिमण्डपयुतं वज्रैश्च सोपानकैः
नानारत्नविराजितैश्च कलशैरत्यन्तशोभावहम् ॥१॥

द्वारैश्चामररत्नजगतखचितैश्शोभावहं मण्डितं
रत्नाग्रयैरपि शङ्खपद्मधवलै प्रभ्राजितं स्वस्तिकैः ।
माणिक्योज्ज्वलदीपदीप्तिविलसल्लक्ष्मीविलासास्पदं
ध्यायेन्मण्डपमर्चनेषु सकलेष्वेवंविधं साधकः ॥२॥

ततः सक्तुमिव इति प्रतिमामुखवस्त्रं विसृज्य हिरण्यवर्णां इत्यनेन प्रतिमां निरीक्ष्य

ततः कृताञ्जलिर्भूत्वा प्रार्थयेच्च जनार्दनम् ।
कृपयोत्थीयतां तल्पात्तव पूजाक्रिया यतः ॥

आयताभ्यां विशालाभ्यां शीतलाभ्यां कृपानिधे ।
करुणारसपूर्णाभ्यां लोचनाभ्यां विलोकय ॥

इति देवं प्रार्थ्य देवमुत्थाप्य पीठे उपवेशयेत् ।

**आसनविधिः**

**अध्यासितासने स्वस्थे(स्थोप)**
**ह्यपक्रामन्त्वितीरयन् (ति पूर्वकान्)**
**छोटिकामुद्रया कुर्याद् भूतोच्चाटनमप्युत ।**
**(मन्त्रानुदीर्य भूतानि मुद्रया छोटिकाख्यया ॥)**

अध्यासितासने – रचनाधिष्ठितासने । अध्यासीतासने स्वस्थो ह्यपक्रामन्त्वितीरयन् इति पाठं परिकल्प्य आसने अध्यासीत् – आसने उपवेशनं कुर्यात् इति तस्यार्थं मत्वा केनचित् शङ्कितम् – आरुह्य वेदिकां पश्चाद्ब्रह्मपारस्तवं पठेत् इत्युक्तशेषपूरणेन यत्कूर्मासनादावुपवेशनमुक्तं तदनुपपन्नम् । अध्यासीतेत्यनेन पौनरुक्त्यापातात् इति तन्निरस्तम् ।

प्रागुक्तस्यैव अधिकविधानायात्रानुवादात् । अधिशीङ्स्थासां कर्म इति स्मरणात् आसनशब्दस्य द्वितीयान्ततया भाव्यत्वेन सप्तम्यनुपपत्तेश्चेति ।

अपक्रामन्त्विति पदस्य अपसर्पन्तु ये भूता इति मन्त्रान्तरस्य उपलक्षकत्वात् तस्यापि सङ्ग्रहः । तस्य विनियोगस्य प्रागभिहितत्वात् पूर्वमन्त्रेण साकमेव एतन्मन्त्रस्य भूतोच्चाटनरूपैकार्थनिर्वाहकत्वेन एकमन्त्रत्वस्य वहुभिः तान्त्रिकैरङ्गीकृतत्वाच्च । अत एव अपसर्पन्तु वामदेवो भूतान्यनुषप् भूतोच्चाटने विनियोगः इत्युक्त्वा मन्त्रद्वयोपन्यासो ग्रन्थकृतां सङ्गच्छते ।

छोटिकामुद्रिका नाम दक्षिणमध्याङ्गुलेः दक्षिणाङ्गुष्ठयोगेन शब्दकरणम् । तथा च

अपसर्पन्तु ये भूता ये भूता भुवि संस्थिताः ।<br>
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ।।

अपक्रामन्तु भूताद्याः क्रूराश्चैव तु राक्षसाः ।<br>
तेषामप्यविरोधेन ब्रह्मकर्म समारभे ।

इति मन्त्रेण देवं प्रार्थयेत् । एतन्मन्त्रस्य आह्निकतरङ्गे देवं प्रति प्रार्थने विनियोगोक्तेः ।

**पृथ्वि त्वयेति मन्त्रेण पृथिवीं प्रार्थयेत्ततः ।**

एतन्मन्त्रस्य प्रार्थने विनियोग उक्तः । तदनुसारेण प्रार्थयेदित्यस्य प्रार्थनापूर्वकमुपवेशयेदित्यर्थः । आह्निकतरङ्गादौ उपवेशे विनियोग उक्तः । तथा च पृथ्वीतिमन्त्रस्य मेरुपृष्ठ ऋषिः, कूर्मो देवता, सुतलं छन्दः, पृथ्वीति प्रार्थनापूर्वकमुपवेशने विनियोगः ।

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।<br>
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ।।

मां च पूतं कुरु धरे नतोऽस्मि त्वां सुरेश्वरि ।

इति मन्त्रेण भूमिप्रार्थनापूर्वकमुपवेशयेत् । आरुह्येत्यत्र केवलमुपवेशनमुक्तम् । अत्र तु प्रार्थनापूर्वकमुपवेशनमिति न पौनरुक्त्यम् । पूर्वमारुह्येत्यादिना उक्तोपवेशनप्रकारं दर्शयति – आसने इति

आसने मण्डले चेन्दोः कूर्मस्कन्देऽहमास्थितः ।।

कल्पयित्वेत्थमासीनो व्याहरेत् भूर्भुवस्वरोम् ।
अथासनमुपस्पृश्य मंडूकाय नमस्ततः ।।

कूर्मायाथ वराहाय शेषायाथ(य च) नमस्ततः ।
नमः कालाग्निरुद्राय वज्राय च नमो नमः ।।

सानुस्वारं चादिवर्णं प्रणवादिमुदीर्य च ।
नमोंतमिति चैतेषु षट्सु चैव जपेद्बुधः ।।

उक्तेषु वक्ष्यमाणेषु स्थानेष्वन्येषु सर्वशः ।
पूजाविधौ च देवानां पीठावरणयोर्वदेत् ।।

तत्तन्नाम चतुर्थ्यन्तं प्रणवादि नमोऽन्तकम् ।
ततोऽस्त्राय फडित्युक्त्वा दिशो बध्वेषुमुद्रया ।।

(प्राकारावस्थितं वह्निं ध्यात्वा मुद्रां सुदर्शनीम् ।

दर्शयेदथ चेन्द्रादिदिक्षु बध्नामि चाष्टसु ।।)
नमश्चक्राय स्वाहेति चक्रमुद्रां प्रदर्शयेत्
(मन्त्रमेनमुदीरयेत्) ।

ऐन्द्यादिदिक्षु बध्नं च मन्त्रेणानेन कारयेत् ।

आसनमपि चैलाजिनकुशोत्तरं कुर्यात् । तदर्थस्तु आदौ कुशासनम् । तदुपरि व्याघ्राजिनम् (गृहिणां कृष्णाजिनम्) । तदुपरि कम्बलादिवस्त्रमिति । इदं चासनम् अनन्तेनमनसा दत्तमित्यनुसन्धेयम् । निरस्तः परावसुरिति च ।

'अर्वावसुपराणवसू भ्रातरौ यज्ञे ऋत्विजौ' इत्यादिना तदुभयार्थसिद्धेः । तथा च निरस्तः परावसुः । इदमहमर्वावसोः सदने सीदामि । तद्दत्त एवासने सोममण्डले कूर्मस्कन्धे उपविष्टोऽस्मीति सञ्चिन्त्य भूर्भुवस्वरोम् इत्युच्चार्य आसनं स्पृष्ट्वा ओं मं मण्डूकाय नमः । ओं कुं कूर्माय नमः । ओं वं वराहाय नमः । ओं शं शेषाय नमः । ओं कं कालाग्निरुद्राय नमः । ओं वं वज्राय नमः । इति जपेत् । तत्राह्निकतरङ्गे उपवेशनस्थानादधस्थात् प्रथमं परमपुरुषस्य आधाररूपशक्तेश्च नमनम् अन्ते च पृथिव्याश्च नमनं प्रतिपादितम् । तदपि पक्षान्तरं ज्ञेयम् । ततोऽस्त्राय फट् इत्युक्त्या इषुमुद्रया दिग्बन्धनं कृत्वा प्राकारावस्थितं वह्निं ध्यात्वा ऐन्द्यादिदिक्षु बध्नामि नमश्चक्राय स्वाहा इति सुदर्शनमुद्रां सर्वतो दिक्षु स्वशिरसि दर्शयेत् । जपार्थं भूतोच्चाटनकाले चक्रमुद्राप्रदर्शनानन्तरं करशुद्ध्यादेः पूर्वं मध्ये किञ्चित्तदधिकं कर्तव्यं पद्यमालायां प्रदर्शितम् । तदनुसारेण तदपि कार्यम् । तच्चेत्थम् ।

**सङ्कल्पः**

**ततस्तिथ्यादि सङ्कीर्त्य स्थितं देशं च संस्मरन् ।।**

अनन्तकल्याणगुणैकसिन्धुश्रीविष्णुना प्रेरितमानसोऽहम् ।
तस्यैव वीर्येण बलेन तेजसा सञ्जीवितस्वान्तवपुश्चिदिन्द्रियः ।।

प्रीत्यर्थमस्यैव करोमि पूजाविधिं प्रदिष्टं खलु तन्त्रसारे ।
ब्रह्माण्डसाहस्रपतेर्दयालोर्भक्त्या यथाशक्ति यथैव सम्पत् ।।

प्राणानायम्य तिथ्यादि सङ्कीर्त्य स्थितं देशं स्मृत्वा श्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थं भगवतो बलेन भगवतो वीर्येण भगवतस्तेजसा भगवतः कर्मणा भगवतो वासुदेवस्याज्ञया यथाशक्ति मिलितोपचारद्रव्यैः पूजाख्यं कर्म करिष्ये इति सङ्कल्प्य

**करशुद्धिः**

**वाय्वग्निवरुणानां च बीजानि यरवाः क्रमात् ।**
**प्रत्येकं सम्पुटीकृत्य प्रणवेन च बिन्दुना ।**
**एभिः कार्यो क्रमात् षोढा करसन्धिषु शोधनम् ।**

षट्करशुद्धिस्तु ओं यं मणिबन्धे, ओं रं प्रकोष्ठे, ओं वं कूर्परे, ओं यं हस्तसन्धिषु, ओं रं तत्पृष्ठे, ओं वं पार्श्वयोः एवं करशुद्धिं कृत्वा

**गुरुनमस्कारः**

**ततः सर्वान् गुरून्नत्वा....**

तत्क्रमः :- श्रीगुरुभ्यो नमः । श्रीपरमगुरुभ्यो नमः । श्रीमदानन्दतीर्थभगवत्पादाचार्यगुरुभ्यो नमः । श्रीवेदव्यासाय नमः । श्रीभारत्यै नमः । श्रीसरस्वत्यै नमः । श्री वायवे नमः । श्रीब्रह्मणे नमः । श्रीलक्ष्म्यै नमः । श्रीनारायणाय नमः । एकादशस्थाने उपास्यदेवतायै नमः । श्रीवासुदेवाय नमः । इति द्वादशनमस्काराः ।

देवतां वासुदेवं च विद्याभ्यासी तु सिद्धिभाक् ।

इत्यत्र मन्त्रजपप्रकरणानुरोधाय देवताशब्दस्य तत्तन्मन्त्रप्रतिपाद्यदेवतापरतया अभियुक्तैर्व्याख्यातत्वेऽपि पूजाङ्गगुरुनमस्कारकाले पूजाविषयभूतोपास्यदेवतापरतयापि व्याख्यातुं शक्यत एव । 'विद्याभ्यासी तु सिद्धिभाक्' इत्यत्र वेद्यते अर्थो अनयेति करणनिष्पन्नस्य विद्याशब्दस्य ज्ञानसाधनीभूतमन्त्रवाचकत्ववत् ज्ञानसाधनपूजावाचकत्वस्याप्युपपत्तेरिति महान्तो निरूपयन्ति ।

**....हृत्पद्माधिष्ठितं प्रभुम्** **॥**

**सुषुम्नामार्गतो नीत्वा विनिदध्यात्स्वमूर्धनि ।**
**ततश्च ब्रह्महन्येति ध्यायेत् स्वं पापपूरुषम् ॥**

**पापपुरुषविसर्जनम्**

ततो हृत्पद्मस्थितं नारायणं सुषुम्नामार्गतो नीत्वा स्वमूर्ध्नि निदध्यात् वामकुक्षिं स्पृष्ट्वा

> ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् ।
> सुरापानहृदायुक्तं गुरुतल्पकटिद्वयम् ।।
>
> तत्संयोगपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ।
> उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ।।
>
> खड्गचर्मधरं कृष्णं कुक्षौ पापं विचिन्तयेत् ।

इति पापपुरुषं ध्यात्वा ।

**आनीय नाभिदेशे तं वायुबीजेन शोषयेत् ।**

तं नाभिदेशमानीय नाभिं स्पृष्ट्वा षट्कोणमण्डलमध्यस्थो नीलवर्णो यकाररूपवायुबीजवाच्यः परमात्मा शङ्खगदाब्जचक्रायुधः वाय्वन्तर्यमी श्रीप्रद्युम्नो भगवान् मच्छरीरस्थं पापपुरुषं वायुना शोषयेत् । इत्युक्त्वा ओं यम् ओं इति षड्वारं जप्त्वा तं शुष्कं भावयेत् । ततस्तं हृदयदेशमानीय

**हृदग्निबीजतो दग्ध्वा भस्म वामनसा त्यजेत् ।।**

हृदयं स्पृष्ट्वा त्रिकोणमण्डलमध्यस्थो रक्तवर्णो रकाररूपाग्निबीजवाच्यः परमात्मा शङ्खाब्जारिगदायुधः अग्न्यन्तर्यामी श्रीसङ्कर्षणो भगवान् मच्छरीरस्थं पापपुरुषं अग्निना निर्दहतु इत्युक्त्वा दक्षिणनासापुटेन वायुं पूरयित्वा तेनाग्निं प्रज्वाल्य ओं रम् ओं इति द्वादशवारं जपन्नेव तं दग्धं मत्वा तद्भस्म वामनासापुटेन त्यजेत् । श्रोत्राचमनं कृत्वा. मस्तके करं न्यस्य

**वारुणेनाथ बीजेन शिरस्थामृतधारया ।**
**प्लावयेत्सर्वगात्राणि...**

वर्तुलमण्डलमध्यस्थः श्वेतवर्णः वकाररूपवरुणवीजवाच्यः परमात्मा शङ्खचक्रपद्मगदायुधः वरुणान्तर्यामी श्रीवासुदेवो भगवान् मच्छरीरमापाद-मस्तकममृतवृष्ट्या वरुणेनाप्लावयतु इत्युक्त्वा ओं वम् ओं इति चतुर्विंशतिवारं जपेत् । ततः

...कृत्वात्मानं ततो हृदि ॥

प्राणायामं ततः कृत्वा तत्वन्यासान्

'स्वामिन् हृदये एहि' इति सम्प्रार्थ्य परमात्मानं हृदयमानयेत् ।

**तत्वन्यासः**

दशतारकयुक्तगायत्र्या प्राणायामः ओं अग्न्यात्मने श्री अनिरुद्धाय नमः । ओं भुवः वाय्वात्मने प्रद्युम्नाय शिरसे स्वाहा । ओं स्वः सूर्यात्मने सङ्कर्षणाय शिखायै वौषट् । ओं भूर्भुवस्स्वः प्रजापत्यात्मने श्रीवासुदेवाय कवचाय हुम् । श्री सत्यं सत्यात्मने नारायणाय अस्त्राय फट् । इति दिग्बन्धः । एतेषां तत्त्वमन्त्राणामन्तर्यामी ऋषिः शिरसि, दैवी गायत्री छन्दः मुखे, तत्त्वान्तर्यामी श्रीनारायणो देवता हृदये,

प्रधानोपमवर्णानि द्विभुजान्यप्यशेषतः ।
कृताञ्जलिपुटान्येव प्रधानं तं हरिं प्रति । (तं.सा.३–१४६)

इति ध्यात्वा तत्त्वान्तर्यामिश्रीनारायणप्रेरणया श्रीनारायणप्रीत्यर्थं तत्वन्यासं करिष्ये इति सङ्कल्प्य हृदये मालाकारेण हस्तं न्यसेत् ।

ओं पराय शक्त्यात्मने श्रीलक्ष्मीनारायणाभ्यां नमः । ओं पराय प्रतिष्ठात्मने श्रीलक्ष्मीनारायणाभ्यां नमः । ओं पराय संविदात्मने श्रीलक्ष्मीनारायणाभ्यां नमः । ओं पराय स्फूर्त्यात्मने श्रीलक्ष्मीनारायणाभ्यां नमः । ओं पराय प्रवृत्त्यात्मने श्रीलक्ष्मीनारायणाभ्यां नमः । ओं पराय कलात्मने श्रीलक्ष्मीनारायणाभ्यां नमः । ओं पराय विद्यात्मने श्रीलक्ष्मीनारायणाभ्यां

नमः । ओं पराय मत्यात्मने श्रीलक्ष्मीनारायणाभ्यां नमः । ओं पराय नियत्यात्मने श्रीलक्ष्मीनारायणाभ्यां नमः । ओं पराय मायात्मने श्रीलक्ष्मीनारायणाभ्यां नमः । ओं पराय कालात्मने श्रीलक्ष्मीनारायणाभ्यां नमः । ओं पराय पुरुषात्मने श्रीलक्ष्मीनारायणाभ्यां नमः ।

यद्यपि शक्तिः प्रतिष्ठा संविच्च स्फूर्तिः प्रवृत्तिरेव च ।
कलां वियां मतिश्चैव माया नियतिरेव च ।।

कालश्च पुरुषश्चेति द्वादशात्मा हरिस्स्त्रयम् ।

इति माघमाहात्म्ये वायुपुराणे शक्त्यादीनां हरिरूपत्वोक्तेस्तदनुसारेण ओं पराय पुरुषात्मने श्रीलक्ष्मीनारायणाभ्यां नमः इति न्यास इति प्रतिभाति । तथापि तन्त्रसारे –

'विष्णोरपि हि रूपाणि तन्नाम्नैकादशैव तु' (तं.सा.३–१४५)

इति शक्त्याद्येकादशानामेव विष्णुरूपत्वमुक्त्वा 'ब्रह्मा तु पुरुषस्स्मृतः' इति द्वादशस्य पुरुषस्य चतुर्मुखब्रह्मवायुरूपत्वोक्तेः । तस्य निर्णायकत्वात् तदनुसारेण वायुपुराणोक्तमप्यनादृत्य ओं पराय पुरुषात्मने ब्रह्मवायुभ्यां नमः इत्येवाभियुक्तानां प्रयोगात्तथैव न्यासः । न तु साम्प्रदायिकः 'परात्मने श्रीलक्ष्मीनारायणाय नमः' इतीत्यवधेयम् । आह्निकतरङ्गे वायुपुराणानुसारात् पराय पुरुषात्मने श्रीलक्ष्मीनारायणाभ्यां नम इति न्यासोऽपि कार्य इत्युक्तम् । दक्षिणहस्ते ओं पराय अव्यक्तात्मने ब्रह्मार्णाभारतीभ्यां नमः । वामहस्ते पराय महदात्मने ब्रह्मवायुभ्यां नमः । दक्षिणपादे पराय अहङ्कारात्मने गरुडशेषरुद्रेभ्यो नमः । वामपादे पराय मनआत्मने स्कन्देन्द्रादिभ्यो नमः । दक्षिणहस्ताङ्गुष्ठादिपञ्चाङ्गुलिषु पराय श्रोत्रात्मने दिग्देवताभ्यो नमः । पराय त्वगात्मने प्राणाय नमः । पराय चक्षुरात्मने सूर्याय नमः । पराय जिह्वात्मने वरुणाय नमः । पराय घ्राणात्मने अश्विभ्यां नमः । वामहस्ताङ्गुष्ठादि-पञ्चाङ्गुलिषु पराय वागात्मने वह्नये नमः । पराय पाण्यात्मने दक्षाय नमः ।

पराय पादात्मने जयन्ताय नमः । पराय पाय्वात्मने मित्राय नमः । पराय उपस्थात्मने मनवे नमः । दक्षिणपादाङ्गुलिषु पराय शब्दात्मने वृहस्पतिप्राणाभ्यां नमः । पराय स्पर्शात्मने अपानाय नमः । पराय रूपात्मने व्यानाय नमः । पराय रसात्मने उदानाय नमः । पराय गन्धात्मने समानाय नमः । वामपादाङ्गुलिषु पराय आकाशात्मने महागणपतये नमः । पराय वाय्वात्मने प्रवहाय नमः । पराय तेज आत्मने वह्नये नमः । पराय अवात्मने वरुणाय नमः । पराय पृथिव्यात्मने शनैश्चरधराभ्यां नमः । अनेन तत्त्वन्यासेन तत्त्वान्तर्यामी भगवान् लक्ष्मीनारायणः प्रीयतां प्रीतो भवतु कृष्णार्पणमस्तु ।

**मातृकान्यासः**

**...ततः परम् ।**
**मातृकान्यासकान् कृत्वा....**

यद्यपि अकाराद्यक्षराणामेव मातृकात्वात् ओं अं नमः ओं आम् नमः इति न्यासः प्राप्तः । 'नमो विन्दुसमेतांश्च विन्यसेदक्षरान्बुधः' इत्युक्तेः । तथापि शिष्टाचारात् देवतासहितन्यासस्य सफलत्वाच स एव लिख्यते । तत्त्वन्यासोक्तप्रकारेण प्राणायामन्यासौ कृत्वा एतेषां मातृकामन्त्राणां अन्तर्यामी ऋषिः शिरसि, गायत्रीछन्दः मुखे, अजादिरूपी श्रीनारायणो देवता हृदये, ध्याने विनियोगः ।

> तादृग्रूपाश्च पश्चाशज्ज्ञानमुद्राभयोयताः ।
> टङ्की दण्डी च धन्वी च तत्तयुक्तास्तु वामतः । (तं.सा.१-२१)

इति ध्यात्वा अजादिरूपिश्रीनारायणप्रेरणया श्रीनारायणप्रीत्यर्थं मातृकान्यासमहं करिष्ये । इति सङ्कल्प्य मातृका न्यसेत् । तत्क्रमः ।

शिरसि ओं अं अजाय नमः । मुखमभितः ओं आं आनन्दाय नमः । दक्षिणनेत्रे ओं इं इन्द्राय नमः । वामनेत्रे ओं ईं ईशानाय नमः । दक्षिणकर्णे ओं

उं उग्राय नमः । वामकर्णे ओं ऊं ऊर्जाय नमः । दक्षनासापुटे ओं ऋं ऋतुम्भराय नमः । वामनासापुटे ओं ॠं ॠघाय नमः । दक्षिणकपोले ओं ऌं ऌशाय नमः । वामकपोले ओं ॡं ॡजाय नमः । ऊर्ध्वोष्ठे ओं एं एकात्मने नमः । अधरोष्ठे ओं ऐं ऐराय नमः । ऊर्ध्वदन्तपङ्क्तौ ओं ओजोभृते नमः । अधरदन्तपङ्क्तौ ओं औं औरसाय नमः । मुखान्तस्थे मूर्धस्थाने ओं अं अन्ताय नमः । वाचि ओं अः अर्धगर्भाय नमः ।

दक्षिणवाहुसन्धिषु ओं कं कपिलाय नमः । ओं खं खपतये नमः । ओं गं गरुडाय नमः । ओं घं घर्माय नमः । ओं ङं ङसाराय नमः । वामवाहुसन्धिचतुष्टये तदग्रे च ओं चं चार्वङ्गाय नमः । ओं छं छन्दोगम्याय नमः । ओं जं जनार्दनाय नमः । ओं झं झटितारये नमः । ओं ञं ञमाय नमः । दक्षपादसन्धिचतुष्टये अग्रे च ओं टं टङ्किने नमः । ओं ठं ठलकाय नमः । ओं डं डरकाय नमः । ओं ढं ढरिणे नमः । ओं णं णात्मने नमः । वामपादसन्धिषु अग्रे च ओं तं ताराय नमः । ओं थं थवाय नमः । ओं दं दण्डिने नमः । ओं धं धन्विने नमः । ओं नं नम्याय नमः । दक्षपार्श्वे ओं पं पराय नमः । ओं फं फलिने नमः । ओं वं वलिने नमः । ओं भं भगाय नमः । ओं मं मनवे नमः । हृदि ओं यं यज्ञाय नमः । त्वचि ओं रं रामाय नमः । चर्मणि ओं लं लक्ष्मीपतये नमः । मांसे ओं वं वराहाय नमः । रुधिरे ओं शं शान्तसंविदे नमः । मेदसि ओं षं षड्गुणाय नमः । मज्जायां ओं सं सागात्मने नमः । अस्थिषु ओं हं हंसाय नमः । प्राणे ओं ळं ळाळुकाय नमः । जीवे ओं क्षं लक्ष्मीनृसिंहाय नमः । इति मातृकान्यासः ।

...प्राणानायम्य मूलतः ।।

अष्टाक्षरन्यासपूर्वं ध्यात्वाद्यद्वास्त्वदित्यथ ।
पूजाङ्गमिति मूलं च जपेदष्टोत्तरं शतम् ।।

**पुनश्चाक्षरविन्यासं कृत्वा ध्यायेद्धरिं पुनः ।**

'विन्यसेत् वर्णैकैकं विन्द्वन्तं' इत्युक्तेः सर्वत्र ओंकारो योजनीयः । विन्द्वन्तं प्रायिकम् । 'अः अर्धगर्भाय नमः' इत्यत्र तदभावात् ।

**नारायणाष्टाक्षरमन्त्रः**

एकादशस्थाने श्रीनारायणाय नमः इति वदेत् । मूलमन्त्रेण प्राणायामः । अथ पञ्चाङ्गन्यासः । ओं कृद्धोल्काय हृदयाय नमः । ओं महोल्काय शिरसे स्वाहा । ओं वीरोल्काय शिखायै वौषट् । ओं द्युल्काय कवचाय हुम् । ओं सहस्रोल्काय अस्त्राय फट् । इति दिग्बन्धः ।

ततः कृद्धोल्कादिपञ्चमन्त्रैः द्विरावृत्तैः ज्येष्ठाङ्गुलिमारभ्य अङ्गुलिषु न्यस्य अष्टाङ्गन्यासं कुर्यात् । तत्क्रमः । ओं ओं विश्वाय नमः शिरसि । ओं नं तैजसाय नमः नेत्रयोः । ओं मों प्राज्ञाय नमः नासायाम् ।ओं नां तुर्याय नमः वाचि । ओं रां आत्मने नमः हृदये । ओं यं अन्तरात्मने नमः नाभौ । ओं णां परमात्मने नमः जान्वोः । ओं यं ज्ञानात्मने नमः पादयोः । इति न्यस्य ओं विश्वाय नमः इत्यादिमन्त्रैः ज्येष्ठाङ्गुलिं विहाय अष्टाङ्गुलिषु न्यस्य अस्य श्रीनारायणाष्टाक्षरमन्त्रस्य अन्तर्यामी ऋषिः शिरसि, दैवी गायत्री छन्दः मुखे, श्रीलक्ष्मीनारायणो देवता हृदये, ध्याने विनियोगः ।

उद्यद्भास्वत्समाभासश्चिदानन्दैकदेहवान् ।
चक्रशङ्खगदापद्मधरो ध्येयोऽहमीश्वरः ।।

लक्ष्मीधराभ्यामाश्लिष्टस्स्वमूर्तिगणमध्यगः ।
ब्रह्मवायुशिवाहीशविपेशशक्रादिकैरपि ।।

सेव्यमानोऽधिकं भक्त्या नित्यनिश्शेषशक्तिमान् ।

(तं.सा.१–१८.१९)(इति ध्यात्वा)

मूर्तयोऽष्टावपि ध्येयाश्चक्रशङ्खवराभयैः ।
युक्ताः प्रदीपवर्णाश्च सर्वाभरणभूषिताः । (तं.सा.१–२०)

इति विश्वादीन् वर्णदेवान् ध्यात्वा

चक्रशङ्खवराभीतिहस्तान्येतानि सर्वशः ।
मूलरूपसवर्णानि कृष्णवर्णा शिखोच्यते ।(तं.सा.१–३३)

इति कृद्धोल्कादीश्च ध्यात्वा श्रीलक्ष्मीनारायणप्रेरणया श्रीलक्ष्मीनारायणप्रीत्यर्थं श्रीमन्नारायणाष्टाक्षरमन्त्रजपं करिष्ये । इति सङ्कल्प्य पूजाङ्गम् ओं ओं नमो नारायणाय ओं इति आद्यन्तप्रणवसाहित्येन जप्त्वा पुनः प्राणायामन्यासान् कृत्वा ध्यानश्लोकं पठित्वा समाप्य यस्य स्मृत्येति अनेन नारायणष्टाक्षर-मन्त्रजपेन भगवान् मुख्यप्राणान्तर्गतः श्रीलक्ष्मीनारायणः प्रीयतां प्रीतो भवतु श्रीकृष्णार्पणमस्तु ।

## पूजार्थं प्रार्थना

**ततः कृताञ्जलिर्भूत्वा निषुसीदेति ऋचं पठेत् ।।**

'निषुसीद गणपते'

**आराध्यसे प्राणभृता प्रणेत्रा प्राणाधिनाथेन समीरणेन ।**
**नारायण ज्ञानसुखैकपूर्ण स्वामिन् मम श्रीरमण प्रसीद ।।**

**बिम्बोऽसि प्रतिबिम्बोऽस्मि तव यद्यपि चान्तरम् ।**
**स्वामिन्निर्दोष मद्दोषान् विरेचय नमोऽस्तु ते ।।**

**भगवन् यन्मया कर्म शुभं कारयसि प्रभो ।**
**तत्सर्वं विष्णुपूजास्तु तव देव प्रसादनः ।।**

**सम्प्रार्थ्यैवं देवदेवं मुद्रया प्रार्थनाख्या**
**(सम्प्रार्थ्यैवं स्वबिम्बस्थं मुद्रया प्रार्थनाख्यया ।)**

जयाच्युत जयानन्त जय कृष्ण हरे प्रभो ।
जय केशव लक्ष्मीशेत्येवं कृष्णं परिव्रजेत् ।।

मयि स्थितो मदङ्गेषु स्वतन्त्रो व्याप्तवान्हरिः ।
स सर्वं स्वात्मतन्त्रात्मा स्वेच्छया वर्तयत्यजः ।।

अनंशस्यापि जीवस्य किञ्चित्समार्थ्ययोजनाम् ।
कार्येषु यः करोत्यद्धा नमस्तस्मै स्वयम्भुवे ।।(अनु.२–९६)

स्ववन्दनं यथा पित्रा कारितं शिशुकर्तृकम् ।
एवं पूजा विष्णवधीना भवेज्जीवकृतेत्यपि ।।

ज्ञानकर्मेन्द्रियगतैर्ब्रह्मरुद्रपुरःस्सरैः ।
सन्मार्गे प्रेरितोऽहं त्वा पूजयाम्यथ माधव ।।

इत्यपि प्राथ्र्य कलशाराधनं करिष्ये इति सङ्कल्प्य

**कलशस्थापनम्**

कलशं पूजयेत् पश्चादाह्वयेद्देवताशतम् ।।

मातृका एकपञ्चाशत् चतुर्विंशतिमूर्तयः ।
केशवाद्यास्तथा विश्वतैजसप्राज्ञतुर्यकाः ।।

आत्मान्तरात्मपरमज्ञानात्मावासुदेवकः ।
सङ्कर्षणश्च प्रद्युम्नोऽनिरुद्धो मत्स्यकच्छपौ ।।

कोलो नृसिंहः सवदुर्जामदग्न्यरघूद्वहौ ।
वासिष्ठयादवौ कृष्णावात्रेयो बुद्धकल्किनौ ।।

शिंशुमारश्चेति शतं मूलमूर्त्या समन्वितम् ।
आहूय देवताः पूज्याः (पूजयेदेताः) स्नानीयकलशे बुधैः(बुधः)

नैवेद्यप्रोक्षणार्थं च पञ्चपात्रप्रपूरणे ।
पानीयार्थं पृथक् चैव(कं) कलशत्रितयं भवेत् ।।

पाणिप्रक्षालनार्थं तु गन्धाद्यर्थमिति द्वयम् ।
पञ्चैव(ते) कलशाः प्रोक्तास्सम्भवे सति साधयेत्
(गन्धार्थं द्वौ पुनः पृथक्) ।।

तदभावे त्रयोऽपि स्युर्द्वौ द्वावप्यसम्भवे ।
सर्वेषामप्यभावश्चेद्भिन्नपात्राणि कल्पयेत् ।

एकस्मादेव पश्चात्तं कलशं पूजयेद्बुधः
(सम्भवे सप्तकलशाः पञ्च वाथ त्रयो द्वयम् ।

असम्भवे च सर्वेषां भिन्नपात्राणि कारयेत् ।
एकस्मादपि पश्चात्तं कलशं पूजयेद् बुधः)

कलशाश्च सप्त सम्पादनीयाः इति मुख्यः । पञ्च वा त्रयो वा द्वौ वा सर्वेषामप्यभावे एकस्मादपि कलशात् पात्रभेदकल्पनं वेति पक्षास्त्वनुकल्पाः । 'सम्भवे सप्तकलशाः पञ्च वाथ त्रयो द्वयम् । असम्भवे तु पात्राणां भिन्नपात्राणि कल्पयेत्' इत्युक्तेः । सप्तादिकलशानां विनियोगोऽप्युक्तोऽस्ति ।

पूर्णकुम्भस्स्नानकुम्भो निर्माल्यापनये परः ।
नैवेद्यप्रोक्षणार्थश्च पञ्चपात्रप्रपूरकः ।।

पानीयार्थस्तथा शङ्खभ्रमणार्थश्च सप्तमः ।
सप्त कुम्भा इति ज्ञेया अथ वा पञ्चकुम्भकाः ।।

पूर्णकुम्भस्स्नानकुम्भो निर्माल्यापनये परः ।
एको नैवेद्यपानीये शङ्खस्य भ्रमणाय च ।।

पूर्णकुम्भस्स्नानकुम्भो निर्माल्यापनये परः ।
इति त्रयो वा कुम्भास्स्युर्द्वौ वा ज्ञेयौ विचक्षणैः ।।

पूर्णकुम्भः स्नानकुम्भो ह्यत्र पञ्चादिपक्षके ।
स्नानार्थः कुम्भ एव स्यात्पानीयाद्यर्थसाधकः ।।

इति । अत्र पद्यमालायां पञ्चेति पक्षे प्रकारान्तरेण विनियोगोक्तिः पक्षान्तरप्रदर्शनायेति न विरोधः । पञ्चादिके पक्षके इत्युपलक्षणम् । सप्तेति पक्षेऽपि अनुक्तयोरावश्यकयोः गन्धार्थकहस्तक्षालनार्थयोः कलशयोः स्नानकुम्भः साधकी भवति । न्यायसाम्यादित्यपि द्रष्टव्यम् । तेन

सम्भवे सप्तकलशानभिषेकस्य सिद्धये ।
वृहत्कलशमेकं तु द्वितीयं कुम्भसंज्ञितम् ।।

नैवेद्यप्रोक्षणायैकं पञ्चपात्रप्रपूरकम् ।
पानीयार्थं च गन्धार्थं स्वहस्तक्षालनाय च ।।

इति गन्धार्थस्य स्वहस्तक्षालनार्थकस्य चावश्यकतयोक्तत्वात्तयोरनुक्ते-र्न्यूनतेति शङ्कानवकाशः । अन्यथा वचनान्तरे आवश्यकयोः निर्माल्यापनय-शङ्खभ्रमणार्थकयोरनुक्तेस्तत्रापि न्यूनतापातात् । तत्परिहाराय वृहत्कलशस्यैव तदुभयसाधकत्वपक्षे प्रकृतेऽपि साम्यात् । पञ्चादिपक्षके तु पानीयादीत्यादि-पदेनैव गन्धादेरपि शक्यसङ्ग्रहत्वान्न तस्यानुक्तत्वप्रयुक्तन्यूनताप्रसक्तिरित्यव-धेयम् ।

यद्यपि पञ्चेति पक्षे स्नानार्थकुम्भस्य पानीयाद्यर्थसाधकत्वं न सम्भवति । पानीयादीत्यादिपदोपात्तपञ्चपात्रप्रपूरणाद्यर्थसाधकत्वसम्भवेऽपि पानीय-साधकत्वासम्भवात् । 'एको नैवेद्यपानीय' इति पानीयार्थकस्य कलशस्य पृथगभिहितत्वात् । तथापि पञ्चेति पक्षे पानीयादीत्यादिपदोपात्तपञ्चपात्र-प्रपूरणाद्यर्थानामेव साधको भवति । पञ्चादीत्यादिपदोपात्तपक्षे द्वये तु पानीयादेरनुक्तस्य सर्वस्यापि साधको भवति इति बुद्ध्या विवेकेनार्थो ध्येयः । तथा च स्नानकुम्भोदकत एव विभज्य भिन्नभिन्नपात्रेषु क्षेपणीयम् । तैश्च गन्धसम्पादनहस्तप्रक्षालनपञ्चपात्रपूरणादिकमनुक्तमावश्यकं सर्वं कार्यमित्युक्तं भवति । एवं कलशान् सम्पाद्य तत्र वृहत्कलशमभिषेकार्थं सूक्ष्मकलशं कुम्भाभिषेकार्थं स्थापयित्वा कलशद्वयमग्रे षट्कोणपद्मं विलिख्य तत्र हस्तं

निधाय वुधवरुणान्तर्यामिश्रीलक्ष्मीनारायणमावाह्य तयोः गन्धोदकतुलसी-पुष्पाणि क्षिप्त्वा हस्तेन कलशौ स्पृष्ट्वा

**कलशपूजा**

कलशस्य मुखे विष्णुः कण्ठे रुद्रस्समाश्रितः ।
मूले तत्र स्थितो व्रह्म मध्ये मातृगणास्स्मृताः ।।

कुक्षौ तु सागरास्सप्त सप्तद्वीपा वसुन्धरा ।
ऋग्वेदोऽथ यजुर्वेदस्सामवेदो ह्यथर्वणः ।।

अङ्गैश्च सहितास्सर्वे कलशं तु समाश्रिताः ।

इति सार्धमन्तरद्वयपठनपूर्वकं विष्ण्वादिदेवतानां तत्तद्देशावस्थानानु-सन्धानरूपां पूजां कृत्वा

'अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा ।
आयान्तु देवपूजार्थं दुरितक्षयकारिकाः' । इत्युक्त्वा गङ्गाद्या आवाहयेत् ।

तत्र मन्त्राः

**इमं मे चाथ गङ्गे च यमुनेत्यादिकं पठेत् (चेत्यादि मन्त्रानुदीरयेत्)**

इमं मे गङ्गे इति मन्त्रस्य सिन्धुद्वीपऋषिः । सर्वा नद्यो देवताः । जगती छन्दः । सर्वनदीप्रार्थने विनियोगः ।

इमं मे गङ्गे यमुने सरस्वती शुतुद्रिस्तोमं सचता परुष्ण्या ।
असिक्न्या मरुद्वृधे वितस्तयाऽऽर्जीकीये शृणुह्या सुषोमया ।।
(ऋ.सं.१०-७५-५)

गङ्गे च यमुने चैव गोदावरि सरस्वती
नर्मदे सिन्धुकावेरि जलेऽस्मिन्सन्निधिं कुरु ।।

सर्वे समुद्रास्सरितस्तीर्थानि जलदा नदाः ।
आयान्तु देवपूजार्थमभिषेकार्थमादरात् ।।

इति मन्त्रैः कलशद्वये तुलसीदले स्थापयेत् । ततः कलशद्वये

**शङ्खचक्रगदापद्मधेनुतार्क्ष्यादिमुद्रिकाः ।**
**प्रदर्श्य ...**

अत्र प्रथममिति शेषः । प्रथमं प्रदर्श्य कलशं पूजयेदिति योजना । मुद्राप्रदर्शनानन्तरमेव पूजायाः वहुतरवचनसिद्धत्वात् । अत्र शङ्खादिता-र्क्ष्यान्तमुद्राषट्कपक्षस्यैव मुख्यत्वमभिप्रेत्य तस्य साक्षादेवोक्तिः । चन्द्रमुद्रा नाराचमुद्रा चेति द्वयं मिलित्वा अष्टौ मुद्रा इति पक्षस्य तदुभये हंसमुद्रां मिलित्वा नवमुद्रा इति पक्षस्य चामुख्यत्वसूचनायादिपदप्रयोगः । वक्ष्यमाणलक्षणप्रतिपादकप्रमाणानुसारेण क्रममाश्रित्य मुद्राः प्रदर्शनीयाः । तथा च निर्विषीकरणार्थं

पक्षिराजाय विद्महे वक्रतुण्डाय धीमहि । तन्नो गरुडः प्रचोदयात् ।
तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि । तन्नो गरुडः प्रचोदयात् ।

इति मन्त्राभ्यां गरुडमुद्रां प्रदर्श्य

'धेनुमुद्रां स्रवद्धारां शुद्धां पूर्णां विचिन्तयेत्'

इत्युक्तरीत्या कामधेनो अमृतं दुहेति ध्यात्वा

'सर्वकामदुघे देवि सर्वतीर्थाभिषेचनि ।
पावने सुरभिश्रेष्ठे देवि तुभ्यं नमोऽस्तु ते'

अमृतस्राविण्यै सुरभ्यै नमः इति मन्त्रेण धेनुमुद्रां,

प्रवित्रीकरणार्थं 'ॐ नमो भगवते पाञ्चजन्याय महाशङ्खाय सर्वपाताल-वासिनां विक्षोभकाय हुं फट् स्वाहा' इति मन्त्रेण शङ्खमुद्रां,

संरक्षणार्थं 'ओं नमः सुदर्शनाय महाचक्राय हुं फट् स्वाहा' इति चक्रमुद्रां, दिग्वन्धनार्थं 'ओं नमो भगवत्यै गदायै भावरूपिण्यै कौमोदक्यै हुं फट् स्वाहा' इति मन्त्रेण गदामुद्रां, जलशोधनार्थं पद्ममुद्रां चेति मुद्राषट्कं प्रदर्शयेत् ।

**मुद्रालक्षणानि**

सङ्गहस्तु –

ताक्ष्र्यगोशङ्खचक्रगदापद्माभिधास्तु षडिति । ताक्ष्र्यादिमुद्रालक्षणानि तु

'हस्तौ तु विमुखौ कृत्वा ग्रथयित्वा कनिष्ठिके ।
मिथस्तर्जनिके श्लिष्टे श्लिष्टावङ्गुष्ठकौ तथा ।।

मध्यमानामिकाभ्यां तु द्वौ पक्षावेव कुञ्चयेत् ।
एषा गरुडमुद्रा स्यादशेषविशनाशनीम् ।।

हस्तद्वये त्वधोवक्त्रे सम्मुखे च परस्परम् ।
वामाङ्गुलीर्दक्षिणस्य चाङ्गुलीनां च सन्धिषु ।।

संवेश्य मध्यमाभ्यां तु तर्जन्यौ द्वे प्रयोजयेत् ।
कनिष्ठे द्वेऽनामिकाभ्यां युञ्ज्यात्सा धेनुमुद्रिका ।।

वामाङ्गुष्ठं तु सङ्गृह्य दक्षिणेन तु मुष्टिना ।
कृत्वोत्तानं तथा मुष्टिमङ्गुष्टं तु प्रसारयेत् ।।

वामाङ्गुलीस्तथा श्लिष्टास्संयुक्तास्तु प्रसारिताः ।
दक्षिणाङ्गुष्ठसंश्लिष्टा मुद्रा शङ्खस्य चोदिता ।।

हस्तौ तु सम्मुखौ कृत्वा संलग्नौ सुप्रसारितौ ।
कनिष्ठाङ्गुष्ठकौ लग्नौ मुद्रा चक्रस्य सिद्धिदा ।।

अन्योन्याभिमुखौ हस्तौ कृत्वा तु ग्रथिताङ्गुली ।
अङ्गुल्यौ मध्यमे भूयस्संलग्नौ सुप्रसारिते ।।

गदामुद्रा समाख्याता परा मुक्तिकरी सदा ।
करौ तु सम्मुखौ कृत्वा संहतावुन्नताङ्गुली ।।
तलान्तर्मिलिताङ्गुष्ठौ कुर्यात्सा पद्ममुद्रिका ।

इति वचनानुसारेण ज्ञेयानि । एवं मुद्राष्टकप्रदर्शनानन्तरं स्नानीयकलशस्य मुखे पूर्वादिचतुर्दिक्षु क्रमेण श्रीनारायणाय नमः श्रीवासुदेवाय नमः । श्री प्रद्युम्नाय नमः । श्रीअनिरुद्धाय नमः इति गन्धयुक्ततुलसीदलैः पूजये इति पूजयित्वा कलशद्वयजले वक्ष्यमाणप्रकारेण पीठपूजां कृत्वा, स्नानीयकलशे सूर्यान्तर्गतश्रीलक्ष्मीनारायणं अजादिशतकलशदेवताभिः सह 'एहि एहि' इति विज्ञाप्य, मूलेन भगवन्तं श्रीनारायणं आवाहयामि आवाहयामि इति द्विरुच्चार्य, आवाहनमुद्रां प्रदर्श्य, आवाहितो भवेत्युक्त्वा ओं अजाय नम इत्यारभ्य क्रमेण क्षं लक्ष्मीनरसिंहाय नमः इत्यन्तं एकपञ्चाशन्मूर्तीः, ओं कें केशवाय नमः इत्यादि क्रमेण चतुर्विंशतिमूर्तीः, ओं आं आत्मने नमः । ओं अं अन्तरात्मने नमः ।ओं पं परमात्मने नमः । ओं ज्ञां ज्ञानात्मने नमः । ओं वां वासुदेवाय नमः । ओं सं सङ्कर्षणाय नमः । ओं प्रं प्रद्युम्नाय नमः । ओं अं अनिरुद्धाय नमः । ओं विं विश्वाय नमः । ओं तं तैजसाय नमः । ओं प्रां प्राज्ञाय नमः । ओं तुं तुर्याय नमः । ओं मं मत्स्याय नमः । ओं कुं कूर्माय नमः । ओं वं वराहाय नमः । ओं नं नरसिंहाय नमः । ओं वां वामनाय नमः । ओं भा भार्गवाय नमः । ओं रां राघवाय नमः । ओं व्यां व्यासाय नमः । ओं क्लीं कृष्णाय नमः । ओं दं दत्तात्रेयाय नमः । ओं वुं वुद्धाय नमः । ओं कं कल्किने नमः । ओं शिं शिंशुमाराय नमः । इत्यन्तमुक्त्वा ओं नं नारायणाय नमः इति चोक्त्वा ता आवाहयेत् । अत्र सूर्यायन्तर्गतश्रीलक्ष्मीनारायणस्य तस्मान्निर्गतानां शतमूर्तीनां चोभयत्रावाहनं दिवा पूजायाम् । रात्रौ पूजायां तु शुक्लपक्षे चन्द्रान्तर्गतानां कृष्णपक्षे वह्न्यायन्तर्गतानामावाहनमिति ज्ञातव्यम् । यथोक्तम् –

'कृत्वा' पीठार्चनं ह्येकशतमूर्तीरजादिकाः ।
मूलरूपेण सहितास्सूर्यमण्डलसंस्थिताः ।।

रात्रौ शुक्ले त्विन्दुसंस्थाश्चाह्नि वा वह्निमध्यगाः ।
आवाह्य पूजामखिलं कृत्वा विष्णौ समर्पयेत्' ।। इति ।

एवं स्नानीयकलशे एकोत्तरशतमूर्तीरावाह्य द्वितीयकलशेऽपि तासां व्युत्क्रमेणावाहनं कार्यम् । तासां भक्तप्रार्थनया रूपान्तराणि स्वीकृत्य व्युत्क्रमेण द्वितीयकलशे प्रवेशसम्भवात् । तथा च सूर्यान्तर्गतश्रीलक्ष्मी-नारायणं, शिंशुमारादिशतकलशदेवताभिः सह 'एहि एहि' इति विज्ञाप्य मूलेन भगवन्तं श्रीलक्ष्मीनारायणमावाहयामि आवाहयामि इति द्विरुच्चार्य, आवाहनमुद्रां प्रदर्श्य, आवाहितो भवेत्युक्त्वा शिंशुमाराय नमः इत्यारभ्य अजाय नमः इत्यन्तमुक्त्वा, नारायणाय नमः इति चोक्त्वा ताः तं चावाहयेत् । अत्र शिंशुमारादिअजान्तशतमूर्तीनां पूजाकाले स्मरणाय आह्निकतरङ्गे तासां सङ्ग्रहः कृतः ।

शिंशुमारं कल्किबुद्धौ दत्तात्रेयं च कृष्णकम् ।
वेदव्यासं रामचन्द्रं भार्गवं वामनं तथा ।।१।।

नारसिंहं वराहं च कूर्मं मच्छ्यं तुरीयकम् ।
प्राज्ञतैजसविश्वानिरुद्धान् प्रद्युम्नकं तथा ।।२।।

सङ्कर्षणं वासुदेवं ज्ञानात्मपरमात्मकौ ।
अन्तरात्मानमात्मानं कृष्णं हरिमुपेन्द्रकम् ।।३।।

जनार्दनाच्युतौ नारसिंहाधोजक्षजं तथा ।
पुरुषोत्तमानिरुद्धौ द्वौ प्रद्युम्न वासुदेवकम् ।।४।।

सङ्कर्षणं दामकुक्षि पद्मनाभं हृषीकपम् ।
श्रीधरं वामनं च त्रिविक्रमं मधुसूदनम् ।।५।।

श्रीविष्णुं चैव गोविन्दं माधवं तदनन्तरम् ।
नारायणं केशवं च नारसिंहं च ळालुकम् ॥६॥

हंसं सारात्मरूपं च षड्गुणं शान्तसंविदम् ।
वरं लक्ष्मीपतिं रामं यज्ञं मनुभगौ तथा ॥७॥

वलिनं फलिरूपं च परं नम्यं च धन्विनम् ।
दण्डिनं थवतारौ च णात्मानां ढरिणं तथा ॥८॥

डरकं ठलकं टङ्कं ञसं श्रीझटितारिकम् ।
जनार्दनं तथा छन्दोगम्यं चार्वङ्गमेव च ॥९॥

ङसारघर्मौ गरुडासनं श्रीखपतिं तथा ।
कपिलं चार्धगर्भान्तावौरसौजोभूदेरकान् ॥१०॥

एकात्माननम्लृजम्लृशमृवमृतम्वरम् ।
तथा चोर्जोग्रेशेन्द्रानन्दाजान्नारायणमथापरम् ॥
एतान्देवानाह्वयामि पूर्णकुम्भोदके शुभे ॥११॥

इति । यद्यपि छलारिशेषाचार्यैः तन्त्रसारटिप्पण्यां 'एकपञ्चाशद्वर्णानां' इत्यादिमूलव्याख्यानसमये 'अत्र पूजाकाले द्वौ कलशौ पूज्यौ । स्नानीयकलशः पूर्णकलशश्चेति । तत्र स्नानीयकलशे अजादिशतमूर्तीनामावाहनं इति 'शतं कलाः कलशदेवताः' इति सामान्यवचनात् । पूर्णकलशे तु एकोत्तरशत-मूर्तीनामावाहनम् । 'ताभिस्सहितां मूलमूर्तिं कुम्भोदके सुधीः ।' इति विशिष्योक्तेरित्युक्तम् । तथा च तद्गुरुभिः छलारिनरसिंहाचार्यैः तथैव मूर्त्यावाहने प्रकारोऽभिहितः । तथापि कलशदेवता इत्यस्य कलशद्वयदेवता इत्यर्थः । न केवलं कलशयोरेता एव देवताः किन्तु द्विविधकुम्भोदके इत्यर्थः । 'पूर्णकुम्भस्स्नानकुम्भः' इत्यादौ स्नानीयेऽपि कुम्भशब्दप्रयोगात् इति तन्मूलस्य व्याख्यातुं शक्यत्वात् न तस्य विशिष्योक्तिरूपत्वम् । अत एवैतमेव व्याख्यानमभिप्रेत्य 'इति शतं मूलमूर्त्या समन्वितम् । आहूय देवता पूज्याः

स्नानीयकलशे बुधः' इति पद्यमालायाम् । तथा वेदव्यासतीर्थश्रीमच्चरणकृत-पूजापद्धतौ सदाचारदर्पणाख्यग्रन्थान्तरे च उभयत्र एकोत्तरशतमूर्त्यावाहन-मभिहितम् । अन्यथा तेषामपि विशिष्योक्तिविरोधप्रसङ्ग इत्यवधेयम् ।

एवमावाहितवृहत्कलशपूर्णकलशस्थदेवेषु प्रार्थनामुद्रां विधाय 'भोः देवाः, यूयं यागावसानपर्यन्तमत्र स्थित्वा भक्तस्य मम पूजां गृहीत्वा मां पालयध्वमिति प्रार्थ्य मूलमन्त्रेण आवाहनादिषण्मुद्रां प्रदर्शयेत् । एतासां लक्षणानि वक्ष्यन्ते ।

तदनन्तरं स्नानार्थं मज्जनालयं प्रत्यागच्छध्वमिति प्रार्थयित्वा 'इदं विष्णु' (ऋ.सं.१–२२–१७)इति मन्त्रेण पादुकान्यर्पयित्वा स्नानालयमागतान् ध्यात्वा 'भद्रं कर्णेभिः' (ऋ.सं.१–८९–८) इति मन्त्रेण स्नानपीठे तानुपवेशयित्वा पुनस्तत्रापि आवाहनादिषण्मुद्राः प्रदर्श्य मूलमन्त्रेणैवार्घ्यपाद्याचमनमधुपर्क-स्नानपुनराचमनवस्त्रविभूषणोपवीतासनाख्यषोडशोपचारान् पुष्पेण पात्रभेदेन पृथगुदकं गृहीत्वा तेन वा समर्प्य मातृकान्यासतत्त्वन्यासौ कृत्वा नारायणाष्टाक्षरस्य कृद्धोल्कादिपञ्चाङ्गन्यासं वर्णन्यासं च कृत्वा 'उद्यद्भास्वत्' इति ध्यायेत् ।।

यथा मातृकान्यासस्य तत्त्वन्यासात्पूर्वमेव कर्तव्यं यथा च चतुर्विधन्या-समध्ये पञ्चाङ्गुलिन्यासौ परित्यज्य कृद्धोल्कादिपञ्चाङ्गुलिन्यासवर्णन्यासयोरेव कर्तव्यत्वं तथा प्रतिमापूजाप्रकरणे वक्ष्यामः ।

ततः कलशद्वयं स्पृष्ट्वा

**मूलमन्त्रं च द्विषड्वारं जपत्ततः ।।**

सान्निध्यार्थं द्वादशवारं मूलमन्त्रजपं कुर्यात् ।

यद्यप्याह्निकतरङ्गे कलशपूजाप्रकरणे प्रतिमापूजाप्रकरणे च अभिषेकात्पूर्वत्र तत्त्वन्यासादिध्यानान्तं कार्यमित्युक्तम् । तथापि 'अभिषेकात्पुरा वापि

पश्चाद्वा परमात्मनि' इति अभिषेकानन्तरमपि तस्याः कर्तव्यत्वस्य पद्यमालायामेव वक्ष्यमाणत्वात् न दोष इति ज्ञेयम् ।

तदन्तरं गन्धतुलसीदलसहितं पुष्पं चार्पयेत् । एवमर्घ्यादि द्वादशोपचार-पर्यन्तं पूजां कृत्वा कलशयोरावरणपूजां वक्ष्यमाणप्रकारेण विधाय आवरणदेवताभ्यः अर्घ्य–पाद्य–आचमन–मधुपर्क–पुनराचमन–स्नान–वासो–विभूषणा–उपवीत–आसन–गन्ध–पुष्पाख्यद्वादशोपचारान् समर्पयेत् । अवशिष्टधूपदीपाद्युपचारास्तु विष्णुना सहैव समर्पणीयाः । पीठदेवानां तु सर्वेऽप्युपचारा विष्णुना सहेति विशेषोऽत्रानुसन्धेयः ।

**पीठदेवानां सर्वेऽप्युपचारा विष्णुना सह**

तदुक्तं तिलके

'अर्घ्यपाद्यावाचमनं साचामं मधुपर्ककम् ।
स्नपनं वसनं चैव गन्धं पुष्पविभूषणम् ।।

दशैतानुपचारांस्तु सर्वेभ्यश्च पृथक्पृथक् ।
लक्ष्म्याद्यावरणस्थेभ्यो नमोऽन्तैः स्वस्वनामकैः ।।

आसनादि तु पीठस्य देवानां विष्णुना सह ।'

इति प्रमाणे अधिकयोरुपवीतासनयोर्वक्तव्यत्वेऽपि अल्पत्वादविवक्षया दशेत्युक्तम् । तथा च तयोरपि ग्रहणं लक्षणयेति ज्ञेयम् । सर्वेभ्य इत्यस्यैव विवरणं लक्ष्म्यादीति । पृथगित्यस्य विष्णोः पार्थक्येन । पीठस्थदेवानां आसनादि तु आसनमारभ्य पुष्पान्ता द्वादशोपचारा विष्णुना सहैव समर्पणीया इत्यर्थः । आसनादीत्यासनस्य आदितया ग्रहणेन प्रथमासनं दत्त्वैव अर्घ्यादिभिः पूजा कार्या । आसीनं प्रत्येव अर्घ्यादिदानस्य विहितत्वात् इति सूचितं भवति । न चैवं निर्माल्यविसर्जनप्रकरणोदाहृते 'अर्घ्यं पाद्यमाचनम्' इति वचने अर्घ्यादित्वेनैव षोडशत्वसङ्ख्याया उक्तत्वात्तद्विरोध इति वाच्यम् । तत्रापि एतद्वचनानुसारेण अर्घ्यादितः पूर्वं आसनदानस्याभिप्रेतत्वात् । न

चोपवीतानन्तरमेवासनदानस्य तत्राभिहितत्वेन अर्घ्यादितः पूर्वं आसनदानाङ्गीकारे अन्यतराधिक्येन षोडशत्वसङ्ख्याभङ्ग स्यादिति वाच्यम् । देवस्य पूजास्थानान्निर्गत्य स्नानालयं प्रत्यागत्य स्नानं समाप्य पूजास्वीकाराय पूजास्थानं प्रत्यागमने सति तदेवासनं सुवर्णाद्यात्मकं प्रक्षाल्य पुनर्देयमित्यङ्गीकारेण सङ्ख्याभङ्गाभावात् । रमात्मके चित्रासने उपविष्टायापि पूजकेन सुवर्णाद्यात्मकासनस्य विहितत्वादिति ध्येयम् ।

यथा आसनादिद्वादशोपचाराः केषाञ्चित्पार्थक्येन केषाञ्चिद्विष्णुना सहेति व्यवस्था, तथा धूपाद्युपचारा अपि तथैवेति भ्रान्तिं वारयितुमाह – धूपेति । अत्रादिपदेन नैवेद्यपरिग्रहः । सर्वेभ्यः पीठदेवेभ्य आवरणदेवेभ्यश्चेति प्रमाणार्थः । ततः वृहत्कलशपूर्णकलशदेवताभ्यः पीठावरणदेवतासहिताभ्यः धूपदीपनैवेद्यनमनानि मूलमन्त्रेण दद्यात् । प्रमाणे नमनशव्दस्य प्रदक्षिणसहितनमनवोधकत्वस्यैव धूपशव्देन पुनर्धूपस्य दीपशव्देन नीराजनस्य ग्रहणसम्भवात् । तयोः पृथगर्पणीयत्वेऽपि न षोडशत्वसङ्ख्याभङ्गप्रसङ्गः । अत्रापि नमस्काररूपं चरममुपचारं समर्प्य पुष्पाञ्जलिमप्यर्पयेत् । प्रमाणे पुष्पपदेन अस्यापि लाभात् नोक्तदोषः । ततः पुष्पाञ्जलिं कृत्वा कलशयोः प्रार्थनम् ।

> 'कलशः कीर्तिरायुष्यं विद्यां मेधां श्रियं वलम् ।
> योग्यतां पापहानिं च पुण्यवृद्धिं च साधयेत् ।।
>
> सर्वक्षेत्रमयो यस्मात्सर्वदेवमयो यतः ।
> अतो हरिप्रियोऽसि त्वं पूर्णकुम्भ नमोऽस्तु ते ।।'

इति प्रार्थ्य 'यस्य स्मृत्या' अनेन कलशपूजनेन भगवान् वुधवरुणान्तर्यामी श्रीलक्ष्मीनारायणः प्रीयतां प्रीतो भवतु श्रीकृष्णार्पणमस्तु । इति वदेत् । अत्र अजादिमूर्तीनां शिंशुमारादिमूर्तीनां च अभिषेकदेवैकीभावः । हृत्पद्मं प्रति देवस्योद्वासनकाले तासां सूर्यमण्डलं प्रविश्य तद्गतनारायणेनैकी- भावानुसन्धानं कार्यमिति साम्प्रदायकाः । इति कलशार्चनम् ।

**शङ्खपूजा**

ततः शङ्खपूजां करिष्ये इति सङ्कल्प्य

**कलशोदकपूर्णं तु ततः शङ्खं प्रपूजयेत् ।**
**त्वं पुरेत्यादिकान् मन्त्रान् पठित्वा प्रार्थयेत्ततः ॥**

**जपेत्त्रिः शङ्खगायत्रीं पुनश्शंखादिमुद्रिकाः ।**
**दर्शयित्वाष्टवारं च मूलमन्त्रं जपत्ततः ॥**

त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ।
नमितस्सर्वदेवैश्च पाञ्चजन्य नमोऽस्तु ते ॥

गर्भदिवारिनारीणां विशीर्यन्ते सहस्रशः ।
तव नादेन पाताले पाञ्चजन्य नमोऽस्तु ते ॥

तव नादेन जीमूता विद्रवन्ति सुरासुराः ।
शशाङ्कायुतदीप्ताभ पाञ्चजन्य नमोऽस्तु ते ॥

दर्शनेन हि शङ्खस्य किं पुनस्स्पर्शनेन तु ।
विलयं यान्ति पापानि हिमवद्भास्करोदये ॥

नत्वा शङ्खं करे धृत्वा मन्त्रेणानेन वैष्णवः ।
यः स्नापयति गोविन्दं तस्य पुण्यमनन्तकम् ॥

त्रैलोक्यां यानि तीर्थानि वासुदेवस्य चाज्ञया ।
शङ्खे तिष्ठन्ति विप्रेन्द्र तस्मच्छङ्खं प्रपूजयेत् ॥

इति श्लोकसप्तकपाठपूर्वकं शङ्खं सम्प्रार्थ्य स्नानीयोदकं उद्धरिण्या शङ्खे पूरयेत् । तदुक्तं –

उद्धरिण्या जग्राह्यं नाप्सु शङ्खं निमज्जयेत् ।
शङ्खस्य पृष्ठसंस्पृष्टं पयः पापकरं ध्रुवम् ॥

न तेन स्नापयेद्देवं पूजनात्पापसम्भवः ।

इति अत्र भूमौ शङ्खो न स्थापनीयः ।

यस्तु शङ्खं भुवि स्थाप्य पूजयेन्माधवं प्रभुम् ।
तस्य पूजां न गृह्णाति तस्मात्पीठं प्रकल्पयेत् ।।

इति वचनात् । शिवाद्यन्यदेवानां शङ्खेनाभिषेको न कार्यः ।

शिवं वाप्यन्यदेवं वा यः पुमान्शङ्खवारिणा ।
पूजयेत्तु प्रमादेन सोऽपराधी भवेद्ध्रुवम् ।

इति वचनात् । एवमुद्धरिण्या शङ्खं पूरयित्वा तत्र तुलसीपुष्पं च निधाय 'ओं नमो भगवते पाञ्चजन्याय महाशङ्खाय सर्वपातालवासिनां विक्षोभकाय हुं फट् स्वाहा ओं इति । अन्यथा शङ्खगायत्र्या त्रिवारमभिमन्त्र्य, ध्यानावाहनासनार्घ्यपाद्याचमनमधुपर्कपुनराचमनाख्याष्टोपचारैः तुलसीदलैः पूजयेत् । सङ्ग्रहस्तु –

'ध्यानमावाहनं शङ्खेऽप्यासनार्घ्येऽथ पाद्यकम् ।
आचामं मधुपर्कश्च पुनराचमनं तथा'। इति मामकः श्लोकः

ततो 'यस्य स्मृत्या....'अनेन शङ्खपूजनेन भगवान् श्रीलक्ष्मीनारायणः प्रीयतां प्रीतो भवतु श्रीकृष्णार्पणमस्तु ।

**षट्पात्रस्थापनम्**

पात्राण्यासदयेत्पूर्वं पञ्च पूजाविधौ सदा ।

अत्र मध्ये स्थापनीयं पात्रद्वयं मध्यमत्वेनानुगमय्य पञ्चेत्युक्तम् । वस्तुतस्तु षट्पात्राण्येव विवक्षितानि । अनुपदमेव 'अर्घ्यं वायुपदे प्रोक्तं नैऋत्यां पाद्यमेव च' इति श्लोकेन पात्रचतुष्टयमभिधाय 'मध्ये द्वे सर्वपात्राणां' इति पात्रद्वयस्यापि वक्ष्यमाणत्वात् । अर्घ्यादिसमर्पणकरणेन 'ततोऽर्घ्यं मूलमन्त्रेण' इत्यादिना 'स्नानमाचमनं ततः' इत्यन्तेन

अर्घ्याद्युपचारषट्कसमर्पणोक्त्या षट्पात्रपक्षस्यैव वक्ष्यमाणत्वाच्च । अत आह्निकतरङ्गे षट्पात्रपक्षे एवाभिहित इत्यवधेयम् । न चैवमर्घ्यादिषु प्रविष्टस्य मलापकर्षणस्नानस्य अधिकोपचारत्वोक्त्या 'अर्घ्यं पाद्यं चाचमनम्' इति प्रमाणोदाहृतोपचारषोडशत्वसंख्याभङ्गः स्यादिति वाच्यम् । प्रमाणे स्नानशब्देन शुद्धोदकस्नानमात्रविवक्षायां पञ्चामृतस्नानालाभापत्त्या स्नानत्वेन तस्याप्यनुगमवत् मलापकर्षस्नानस्यापि तेनैव धर्मेण अनुगमाङ्गीकारे षोडशत्वसंख्याभङ्गाभावात् । न चैवं पुनराचमनस्यापि आचमनत्वेन शक्यसङ्ग्रहत्वात् अर्घ्यादीनां षट्कसङ्ख्याकत्वमनुपपन्नं स्यादिति वाच्यम् । प्रमाणे पुनराचमनस्य पृथगुपचारत्वोक्त्या तद्विरोधापातेन तथानुगमासम्भवात् । तत्रापि पृथगुपचारोक्तिस्तस्य कुत इति चेत्, आचमनपुनराचमनयोर्भिन्न-देवताकत्वात् । न चैवं शुद्धस्नानमलापकर्षणस्नानपञ्चामृतस्नानानाम् । तेषां वरुणाख्यैकदेवताकत्वात् इत्यलम् । अत्र पात्राण्यासादयेत इत्यनेन शङ्खपूजानन्तरमेव षट्पात्रपूजा कार्येत्युक्तं भवति । सदाचारदर्पणं तु

'प्रत्येकं मूलमन्त्रेण प्रक्षिपेदुदकं तथा ।
शङ्खं च पूजयेत्तोयैर्जपेत्तेषु च कुम्भवत् ।'

इति वचनमुदाहृत्य 'शङ्खे च' इत्युक्त्या शङ्खपञ्चपात्रपूजयोरेककालत्वं प्रतीयते इत्युक्तम् । तदनन्तरं षट्पात्रेषु 'नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात्' इति विष्णुगायत्र्या पञ्चपात्रप्रपूरककलशस्थोदकं उद्धरिण्या सम्पूर्य –

अर्घ्यं वायुपदे प्रोक्तं नैर्ऋत्यां पाद्यमेव च ॥

ईशे त्वाचमनीयं च स्नानीयं चाग्निकोणके ।
मध्ये द्वे सर्वपात्राणां शुद्धतोयेन पूरयेत् ॥

एकं स्यान्मधुपर्केऽन्यत्पुनराचमने तथा ।

इदं वचनं कर्ता यदि पूर्वाभिमुखो भवति, तदैव । यदि उत्तराभिमुखो भवति, तदा तु पात्रासादने विशेषः 'पञ्चरात्रे' निरूपितः ।

'उत्तराभिमुखः कर्ता यदि पूजां करिष्यति । तदार्घ्यपूर्वपात्राणि स्थानेष्वेतेषु निक्षिपेत् ।

अर्घ्यं निर्ऋतिकोणे स्याद्वायव्ये पाद्यमेव च ।
मध्ये च मधुपर्कं स्यादीशे त्वाचमनं भवेत् ।।

स्नानमाग्नेयके कोणे एवं पात्रव्यवस्थितिः ।

इति । अत्र स्नानमित्युपलक्षणम् । पुनराचमनपात्रमपि ग्राह्यम् ।

**षट्पात्रपूजा**

एवं षट्पात्राणि यथास्थानं निधाय,

अर्घ्यं श्रिया समायुक्तं पाद्यपात्रे सरस्वतीम् ।
रतिमाचमनीये च मधुपर्के पितामहम् ।।

शान्तिं च पुनराचामे स्नानीये वरुणं स्मरेत् ।

इत्युक्तरीत्या अर्घ्ये लक्ष्मीं, पाद्ये सरस्वतीं, आचमनीये रतिं, मधुपर्के पितामहं, पुनराचमनीये शान्तिं, स्नानीये वरुणं च संस्मृत्य,

अर्घ्ये तु दानमुद्रा स्यात्पाद्ये चाञ्जलिमुद्रिका ।
गोकर्णाकृतिराचामे मधुपर्के च सूकरी ।।

पुनराचमने स्नाने हंसमुद्रा प्रकीर्तिता ।।

इत्युक्तरीत्या मुद्राः प्रदर्शयेत् । तल्लक्षणानि तु –

क्षिप्त्वा करतलेऽङ्गुष्ठं किञ्चिदाकुञ्च्य चाङ्गुलीः ।
दानमुद्रा बुधैः प्रोक्ता कनिष्ठाङ्गुष्ठयोस्ततः ।।

मूलेऽङ्गुष्ठे तु निक्षिप्य संवध्याच्छिद्रमङ्गुलीः ।
आकुञ्च्य सम्पुटाकारमञ्जलीमुद्रिका मता ।।

तर्जनीपृष्ठतोऽङ्गुष्ठं वेष्टयित्वा ततोऽङ्गुलीः ।
ऊर्ध्वमाकुञ्च्य सच्छिद्रं मुद्रा गोकर्णिका स्मृता ।।

मुष्टिका दीर्घमध्या तु उत्तानी सूकरी स्मृता ।
हस्तावधोमुखौ कृत्वा संयोगोऽङ्गुष्ठयोस्तथा ।।

तर्जनीभ्यां प्रसार्यान्याश्चाङ्गुलीर्हंसमुद्रिका ।' इति ।

अत्र 'पुनराचमने स्नाने हंसमुद्रा प्रकीर्तिता' इति वचनवलात् पुनराचमनस्नानपात्रयोर्मिलित्वा एकस्या एव हंसमुद्रायाः प्रदर्शनीयत्वात् स्नाने प्रदर्शनीयमुद्रान्तरस्यानुक्तिः । यत्तु 'स्नपने शङ्खमुद्रिका' इति वचने स्नाने शङ्खमुद्राभिधानं तत्तु पक्षान्तरप्रदर्शनार्थमित्यवधेयम् ।

'क्रमं वक्ष्ये तथा चार्घ्यं पाद्यमाचमनीयकम् । मधुपर्कं पुनश्चाचां स्नानं पश्चात्तु कारयेत् ।' इति वचनानुसारेण अर्घ्यादिक्रमो ज्ञेयः । एवं मुद्राः प्रदर्श्य

**निक्षिपेत् गन्धतुलसीपुष्पादीनि यथाविधि ।।**

अत्र आदिपदेन कुशाग्रादीनां सङ्ग्रहः । तथा च

'कुशाग्रान्सर्षपतिलान् फलपुष्पाक्षतान्यवान् ।
गन्धं समर्पयाम्यर्घ्ये लक्ष्मीदेवि नमोऽस्तु ते ।।

इति मन्त्रेण अर्घ्ये कुशाग्रादिगन्धान्तानष्टौ द्रव्याणि स्थापयित्वा 'विष्णुपर्णीस्तिलान्दुर्वाश्शामाकं पद्ममक्षताः । प्रयच्छामि सरस्वत्यै पाद्यपात्रे नमोऽस्तु ते ।' इति मन्त्रेण विष्णुपर्ण्यादीनि अक्षतान्तानि षड्द्रव्याणि संस्थाप्य

'लवङ्गजातिकङ्कोलमेलाकर्पूरचन्दनम् ।

रतिं चाचमने पात्रे ददामि प्रणमाम्यहम् ।।'

इति मन्त्रेण आचमनपात्रे लवङ्गादीनि चन्दनान्तानि षड्द्रव्याणि संस्थाप्य

'दत्वा वन्दे दधिमधु मधुपर्के पितामहम् ।
नारायणाय देवाय नमस्तस्मै परात्मने ।।

इति मन्त्रेण मधुपर्के दधि मधुलक्षणद्रव्यद्वयं स्थापयित्वा

'मकरन्दं देवदारु प्रवालं सुरचन्दनम् ।
धात्रीं च वरुणस्नाने दत्वा त्वां चाभिवादये ।।

इति मन्त्रेण मकरन्ददेवदारुप्रवालरक्तचन्दनधात्रीसंज्ञकानि पञ्चद्रव्याणि सुवर्णं च मलापकर्षणस्नानपात्रे संस्थाप्य

लवङ्गं जातिकङ्कोलं गन्धपुष्पाक्षतादि च ।
शान्तिं च पुनराचामे दत्वा त्वां प्रणमाम्यहम् ।।

इति मन्त्रेण लवङ्गाद्यक्षतान्तषड्याणि पुनराचमनपात्रे स्थापयेत् । एतेषामलाभे गन्धतुलसी पुष्पैरेव निर्वाहः इति सूचनाय तेषां साक्षादुक्तिः । इतरेषां तु आदिपदेनोक्तिरिति ज्ञातव्यम् । पात्राणामभावे शङ्खेनैव अर्घ्यादि दद्यात् । उक्तं च

'पात्राणामप्यभावे तु शङ्ख एव विशिष्यते' इति ।

अत्र शङ्खेनैव अर्घ्यादिदानपक्षे शङ्खान्तरमेव ग्राह्यम् ।

'पात्राण्यासयेत्पञ्च निक्षिपेद्गन्धवारि च ।
तधभावे ह्यन्यशङ्खे तानि तानि प्रकल्पयेत् ।। इति वचनात् ।

तदनन्तरं,

**तुलसीदलयुक्तेन शङ्खतोयेन पूजकः ।**
**पूजाद्रव्याणि सर्वाणि प्रोक्ष्य पीठं प्रपूजयेत् ।।**

त्रिवारमिति शेषः । उपलक्षणमेतत् । देवं चेत्यादिग्राह्यम् । देवं शङ्खाम्बुनाभ्युक्ष्य 'त्रिपूजासाधनानि च' इति वचनात् । अत्र पूजासाधनद्रव्याणां पोक्षणविधायकैतद्वचनानुरोधेन तेषां प्रोक्षणसमये एव तदन्तःपातिनैवेद्यस्यापि शङ्खोदकेन प्रोक्षणं, न नैवेद्यकाले । 'न प्रोक्षयेच्च नैवेद्यं भुञ्जानस्त्वघवान्भवेत् ।' इति निषेधात् । नैवेद्यकाले तु साक्षादेव हस्ते धृत्वा तेनैव प्रोक्षणमिति सम्प्रदायविदः । तथा च तुलसीदलयुक्तेन शङ्खोदकेन त्रिवारं देवं पूजासाधनद्रव्याणि च प्रोक्षयित्वा पञ्चामृतस्नानार्थं पञ्चपात्राणि स्थापयेत् । अत्र कचित्पुस्तकेषु 'तुलसीदलयुक्तेन शङ्खतोयेन पूजकः । पूजाद्रव्याणि सर्वाणि चात्मानं प्रोक्षयेत्' इत्यपि पाठो वर्तते ।

'मध्ये क्षीरं तु दध्यादि न्यसेत्पूर्वादिषु क्रमात् ।
दुग्धं तु देवो गोविन्दो दधि वामनदैवतम् ।।

आज्यं च विष्णुदैवत्यं मधूनि मधुसूदनम् ।
शर्करां चाच्युतं विद्यादेताः पञ्चामृतदेवताः ।।

इत्यनुसन्धाय पञ्चामृतदेवताभ्यः तार्क्ष्य-धेनु-शङ्ख-चक्र-गदा-पद्माख्य-मुद्राषट्कमध्ये जलशोधनरूपप्रयोजनाभावात् पद्ममुद्रातिरिक्ताः पञ्चमुद्राः पूर्वोक्ततत्तन्मन्त्रैः प्रदर्श्य तत्र तुलसीपुष्पाणि क्षिप्त्वा मूलेनावारमभिमन्त्र्य नमस्कृत्य विष्णुगायत्र्या अभिमन्त्रयेत् ।

### पीठपूजा

ततः प्रतिमायां विम्वमूर्त्यावाहनाय पीठपूजाप्रकारस्य वहुपद्धतिषु प्रदर्शितत्वेऽपि आदौ मानसपूजां विधायानन्तरं पीठपूजा ततो ततो विम्वमूर्तिं प्रतिमायामावाह्य च तस्य पूजेति क्रमो ज्ञेयः । तदुक्तं योगदीपिकायां

अथ चान्तःपुरे विष्णोरुपविष्टस्तु मान्त्रिकः ।
अव्यान्धकुसुमैरन्यैः कुर्यादात्मार्चनं हृदि ।। (३-१)

वहिरर्चेत्ततो विष्णुं पुरस्तात्पीठदेवताः ।

इति पीठदेवता इत्यनन्तरं समर्च्येति शेषः ।

मानसपूजाप्रकारस्तु प्रातराह्निकान्त्यभागेऽस्माभिः प्रदर्शितः तत एवनुसन्धेयः । न च तथापि पीठपूजातः पूर्वमेव मानसपूजाविधानं योगदीपिकायमुक्तं न सम्भवति । तथा सति मानसपूजार्थं हृत्पद्मविकसनस्य कर्तव्यत्वापातात् । न चेष्टापत्तिः । तथा सति पद्ममालायां 'पीठपूजां विधायाथ तत्रावाह्येति सूत्रतः । हरिमावाहयेद्भक्त्या तद्विधः प्रोच्यतेऽधुना । अधोमुखं हृत्कमलं' इत्यादिना पीठपूजानन्तरमेव हृत्पद्मविकसनस्य कर्तव्यतया वक्ष्यमाणत्वेन तद्विरोधापातादिति चेन्न । पद्ममालाकृतां पक्षे पीठदेवता आवरणदेवताश्च हृत्पद्मान्निर्गत्य न वहिरागच्छन्ति । किं तु क्षीराब्ध्यादिस्थानविशेषात् । एवं च पीठपूजानन्तरं हृत्पद्मविकसनोक्तिस्तेषां पक्षे युज्यते । योगदीपिकाकाराणां पक्षे तु हृत्पद्मादेव निर्गत्य वहिरागच्छन्ति । ततश्च पीठपूजातः पूर्वं मानसपूजोक्त्या हृत्पद्मविकसनमपि तदा युज्यते एव । तदागमनप्रकारश्च इत्थम् । हृत्पद्मे मानसपूजाकाले पीठावरणदेवताभिः पूजितो भगवान् प्रथमं पीठदेवताः वहिः पूजायै प्रेषयति । ताश्च सुषुम्नामार्गेण ब्रह्मरन्ध्रं प्रविश्य वामनासारन्ध्राद्वहिः आगत्य यजमानस्याञ्जलिस्थपुष्पाञ्जलिस्थे निहिता भवन्ति । करौ सम्पुटवत्कृत्वा आवाहने कृते सति तत्तत्स्थानेषु सन्निहिता भवन्ति । अनन्तरं भगवन्तं हृत्पद्मादुक्तमार्गेण अञ्जलिं प्रत्यानीय अञ्जलिस्थपुष्पे प्राप्तं भावयित्वा पुष्पं प्रतिमापादयोः क्षिप्त्वा आवाह्य अर्घ्यादिद्वादशोपचारान् समर्प्य आवरणपूजने कर्तव्ये हृत्पद्मादुक्तमार्गेणैवाञ्जलिं प्रत्यानयेत् । उद्वासनपर्यन्त हृत्पद्मविकसितत्वेन तेषामागमनसम्भवात् । ततश्च तत्सन्निधानोपेतपुष्पगर्भमञ्जलिं कृत्वा तत्तन्मन्त्रोच्चारणे कृते सति स्वस्वस्थानेषु सन्निहिताः पूजां गृह्णन्तीति । एवं स्थानान्तरादागमनपक्षे विज्ञेयम् । न च स्थानान्तरागतस्य भगवतः अपूजितत्वात् आज्ञादानं तेभ्यो न सम्भवति । तेषामप्यपूजितत्वेन आगमनं च न सम्भवतीति वाच्यम् । अनन्तरूपात्मकस्य बिम्बरूपस्य मानसपूजनेन तस्यापि पूजितत्वेन

आज्ञादानसम्भवात् । अतः पीठादिदेवानां पूजितत्वेन तदभिन्नानां स्थानान्तरस्थानां तेषामपि पूजितत्वमिति ज्ञातव्यम् । ननु अत्र पीठदेवानां पूजनं नाम किं षोडशोपचारपूजनम्, किं वा आवाहनरूपं पूजनं । न तावदाद्यः उदाहृततिलकवचनानुसारेण तेषां भगवता साकमेव तादृशपूजाया अवगमेन पृथक् तादृशपूजाया अभावात् । नापि द्वितीयः । आवाहनस्य हृत्पद्मविकसनसापेक्षत्वेन तस्य भगवदावाहनसमये एव वक्ष्यमाणत्वेन इदानीमनुक्तत्वात् । न च भगवदावाहनस्यैव नियमेन हृत्पद्मविकसनापेक्षा, नावाहनसामान्यस्य । एवं च पीठदेवतावाहनस्य हृत्पद्मविकसनं विनाप्युपपन्नत्वमभिप्रेत्य इदानीमनुक्तिः सम्भवतीति वाच्यम् । तथा सति हृत्पद्मस्थत्वाविशेषेऽपि पीठदेवतानामेवावाहनस्य हृतपद्मविकसनानपेक्षत्व-मित्यत्र नियामकविशेषाभावेन तदावाहनस्यैव भगवदावाहनस्यापि तदनपेक्षत्वसम्भवेन भगवदावाहनार्थं वक्ष्यमाणस्यापि हृत्पद्मविकसनस्यानुप-पत्तिप्रसङ्गात् इति चेन्न ध्यानस्यैवात्र पूजाशब्दार्थत्वाङ्गीकारेण विकल्पित-पक्षद्वयस्य अनङ्गीकारपराहतत्वात् । न च 'अष्टाक्षरेण सम्पूज्य प्रथमं देवतां पराम्'(१–४९) इत्यत्र तन्त्रसारे सम्पूज्येत्यस्य आवाह्येति व्याख्यानास्य तट्टिप्पण्यां छलारिशेषाचार्यैः प्रणीतत्वात् ध्यानस्यैव पूजाशब्दार्थत्वाभ्युपगमे तद्विरोधः । तत्रावाहनस्यैव पूजाशब्दार्थत्वप्रतीतेरिति वाच्यम् । उत्तरवाक्यबलेन पूर्ववाक्यानामर्थान्तरपरतायाः शास्त्रे बहुलमुपलम्भेन तत्रैव 'मध्ये सव्ये गुरूंश्चैव दक्षिणे सर्वदेवताः' इति उत्तरमूलव्याख्यानसमये । अत्र गुरूणां पूजनं नाम ध्यानमेव ।

> 'श्वेताम्बरधरा गौरा गुरवः पुस्तकान्विताः ।
> व्याख्यानमुद्रया युक्ता ध्यायन्तो वै निजं हरिम् ॥
>
> ध्यातव्याः पूजनादौ च तद्ध्यानाज्ज्ञानवान्भवेत् ।'

इति विष्णुतीर्थीयवचनादिति व्याख्यातत्वेन तदनुसारेण पूर्ववाक्येऽपि आवाह्येत्यस्य ध्यात्वेत्यर्थपरतायाः ध्याने आवाहनात्पूर्वभावित्वरूपशक्य-

सम्बन्धरूपलक्षणावलेनोपपन्नतया तद्विरोधाभावात् । गुरूणामेव पूजाशब्दार्थो ध्यानम् । तदितरेषां पूजाशब्दार्थं आवाहनमेवेत्यङ्गीकारे 'अर्धजरतीय' प्रसङ्गेन विष्णुतीर्थीयवचनस्य उपलक्षणाभिप्रायेण प्रवृत्तेरवश्यमङ्गीकर्तव्यतया तदनुसारेण प्रवत्तस्य तेषां वाक्यस्यापि उपलक्षणाभिप्रायेण प्रवृत्तेरङ्गीकार-स्यावश्यकत्वात् । न च ध्यानस्य ध्येयवस्तुसत्तासापेक्षत्वेन तत्सत्तायाश्च आवाहनानन्तरभावितया ततः पूर्वमभावेन अविद्यमानानां ध्यानमपि कथं सम्भवतीति वाच्यम् । पूर्वपूर्वेद्युः पूजितानां पीठदेवानां पूजानन्तरं भगवता साकं हृत्पद्मं प्रति प्रवेशकाले स्वस्वकलाः स्वस्वस्थानेषु स्थापयित्वैव प्रविशन्तीत्यङ्गीकारेण अविद्यमानध्यानाभावात् । अन्यथा भगवतोऽपि पूर्वपूर्वेद्युः प्रतिमायां स्वकलास्थापनाभावापत्तिः । तथा च प्रतिमायास्ताम्रादि-पात्रसाम्यापत्त्या तस्याः खननादिप्रयुक्तसम्प्रोक्षणविधायकानां वाक्यानां दत्तजलाञ्जलित्वापातः । न च भगवदावाहनस्य 'अधोमुखं' इत्यादिना वक्ष्यमाणत्वेन तदावाहनस्य सद्भावात् । पूर्वपूर्वेद्युरावाहितस्य तस्य पूजासमाप्त्यनन्तरं अन्तःप्रवेशसमये प्रतिमायां स्वकलास्थापनसम्भवेऽपि पीठदेवानामावाहनस्यैव भवद्भिरङ्गीकृतत्वेन तेषां वहिरागमनप्रसक्तेरभावेन विम्वरूपहरेरेकस्यैव वहिरागमनापत्तिः । ततश्च महावैभवभङ्गः स्यात् । लोके एकस्यैव मान्यपुरुषस्य प्रयाणे सति तदनुगानामननुसरणस्य तदीयवैभवविरोधित्वदर्शनेन पीठदेवानामपि भगवदननुसरणस्य महावैभव-विरोधित्वादिति वाच्यम् । भगवदावाहनात्पूर्वमेव तेपामावाहनस्य निषेधकरणेऽपि भगवदावाहनसमये भगवता साकं तेपामप्यावाहनस्याङ्गी-कारेणोक्तदोपाभावात् ।

नन्वेवं महावैभवरक्षणं षोडशोपचारपूजास्वीकारद्वारा कलास्थापनं चेति द्वयमपि पीठदेवतावाहनस्य प्रयोजनं इत्युक्तं स्यात् । न चैतदुपपन्नम् । वैभवरक्षणाय तदावाहनस्यावश्यकत्वेऽपि तेपां तादृशपूजास्वीकारस्यैवा-सम्भवेन तद्द्वारा कलास्थापनस्य सुतरामसम्भवेन तदर्थं तदावाहनस्याना-

वश्यकत्वात् । न च तेषां तादृशपूजास्वीकारस्यैव असम्भवे तत्पूजावैय्यर्थ्ये-नाननुष्ठेयत्वं स्यादिति वाच्यम् । तत्संस्थापितकलादेवतानामेव तादृशपूजा-स्वीकारोपपत्त्या तदर्थं तस्यानुष्ठानसम्भवात् । न चैवं पूर्वेद्युः पूजास्वीकारद्वारा कलास्थापनार्थं तदावाहनस्यावश्यकत्वे उत्तरोत्तरदिवसैः किमपराद्धमिति वाच्यम् । अभिप्रायानवगमात् । यस्मिन्दिवसे नूतनप्रतिमायां विम्बमूर्तेरावाहनं क्रियते, तस्मिन्नेव दिवसे पीठदेवताः विम्बमूर्त्या साकमावाहिताः सन्तः तया साकं षोडशोपचारपूजां स्वीकृत्य अन्तःप्रवेशसमये याः कलाः स्थापितवत्यः, तासामेव कलादेवतानां निरन्तरपूजासम्भवेन निरन्तरमन्तस्स्थानामावाहनस्य, आवाहितानां षोडशोपचारपूजास्वीकारस्य तद्द्वारा कलास्थापनस्य च वैय्यर्थेनानुपपन्नत्वादि-त्यभिप्रायात् । एवं च वैभवरक्षणायैवावाहिताः पीठदेवाः स्वस्वकला-सहितभगवत्पूजां पश्यन्तः तत्समीपे एव कृताञ्जलिपुटाः सन्तस्तिष्ठन्ति । पूजासमाप्तौ सत्यां तेन सह अन्तः प्रविशन्ति इति पक्ष एव श्रेयान् इति चेत् अत्रोच्यते । मानसपूजासमये प्राक्कलादेवतानामन्तःपूजितत्वाभावेन प्रागपूजितानां तासां पूजायाः प्राक्पूजितानामन्तस्स्थानामपूजायाश्च विहितत्वाभावात् । प्रथमदिवसे विम्बमूर्त्या प्रतिमायां संस्थापितकला-देवतायाः एव पूजोपपत्त्या प्रतिदिनं तदावाहस्य वैय्यर्थ्यापाताच्च । यदि च अन्तःपूजितोऽप्यहं निरन्तरं प्रतिमायामावाहितः सन्नेव तत्कलया ऐक्यं प्राप्य भक्तकृतपूजनं स्वीकृत्य भक्तेभ्यः फलं दास्यामीति तत्सङ्कल्पसद्भावायुक्तं निरन्तरं प्रतिमायामावाहनमिति विभाव्यते, तदा सङ्कल्पसङ्कोचे कारणाभावात् । पीठावरणदेवैस्सहैवावाहितस्सन् मम कलया एकीभावानन्तरं मदाज्ञया तानपि तत्तत्कलाभिरेकीभावं प्रापय्य तेषां मध्ये पीठदेवैः साकं सम्पूर्णपूजां मदाज्ञया द्वादशोपचारपूजां पृथगेव स्वीकृतवद्भिरावरणदेवैः सह धूपादिपूजां च स्वीकृत्य फलं दास्यामीति तत्सङ्कल्पस्याबाधितस्याङ्गीकर्तव्यतया तदावाहनस्यापि सद्भावात् । एवं च पीठदेवाः भगवतः स्वकलया एकीभावानन्तरं तदाज्ञया

स्वस्वकलाभिरेकीभावं प्राप्यं हरिणा साकं पूजां स्वीकुर्वन्ति । आवरणदेवास्तु अर्घ्यादिद्वादशोपचारपूजां भगवते क्रियमाणां कृताञ्जलिपुटाः पश्यन्तस्सन्तः भक्तकृतावरणदेवताकलाध्यानरूपपूजासमाप्तौ सत्यां भगवदाज्ञया स्वस्व-कलाभिरेकीभावं प्राप्य द्वादशोपचारपूजां पृथगेव स्वीकृत्य धूपाद्युपचारपूजां सहैव स्वीकुर्वन्ति । एवं वज्रनाभादयो द्वारपाला अपीति परमरहस्यमनुसन्धेयमिति सकलमकलङ्कम् ।

ननु 'पीठं प्रपूजयेत्' इत्युक्तम् । तर्हि कोऽसौ पीठपूजायां क्रमः । येनासावनुष्ठेयः स्यादित्यत आह – पूज्यश्चेति ।

**पूज्यश्च भगवान्नित्यमित्यध्याये यथाक्रमः ।**
**श्रीमध्वगुरुणा प्रोक्तः पीठावरणपूजने ।।**

अध्याये–तन्त्रसारस्य प्रथमे अध्याये पीठावरणपूजने विषये, यथाक्रमः– यादृशः क्रमः, श्रीमध्वगुरुणा प्रोक्तः, तादृश एव क्रमो ज्ञातव्यो नास्माभिरसौ पृथग्वक्तव्योऽस्तीति शेषः ।

ननु यथा 'अष्टाक्षरेण सम्पूज्य प्रथमं देवताम्' (तं.सा.१–४९)इत्यादिना तन्त्रसारे पीठपूजाक्रमस्य श्रीमध्वगुरुणा प्रोक्तत्वादसौ भवद्भिर्न वक्तव्यस्तर्हि तथा आवरणपूजाक्रमस्यापि 'लक्ष्मीधरे यजेत्तत्र पार्श्वयोरुभयोर्हरेः' (तं.सा.१–६०)इत्यादिना तन्त्रसारे तेनैव प्रोक्तत्वात्सोऽपि भवद्भिर्न वक्तव्य एव । तथा चावरणपूजायां 'लक्ष्मीं वामे हरेर्यजेत्' इत्यादिना भवद्भिर्वक्ष्यमाणोऽनुपपन्न एवेत्यत आह – सूत्रत्वादिति ।

**सूत्रत्त्वात्तस्य बोधार्थं कचिद्वक्ष्यामि विस्तरम् ।।**

तस्येत्यत्र तच्छब्दस्य पूर्वप्रकृतपरामर्शकत्वात्पूर्वमध्यायस्य प्रकृतत्वात्त-त्परामर्शकत्वम् । 'यथा क्रमः' इति प्रकृतं पराक्रमं तस्येत्यनेन परामृश्य एकवाक्यतयैव योजनेत्यप्याहुः । तथा च तस्याध्यायस्य क्वचित् भागविशेषे आवरणपूजानिरूपके भागे इति यावत् । सूत्रत्वात् सूत्रप्रायत्वात् ।

सूत्राणामिवल्पाक्षरत्वादिति यावत् । उपलक्षणं चैतत् । तत्र तत्र गूढार्थत्वाच्चेत्यपि द्रष्टव्यम् । बोधार्थं तद्भागस्य बोधनार्थम् । विस्तरमपि वक्ष्यामीति शेषः । 'लक्ष्मीधरे यजेत्तत्र पार्श्वयोरुभयोर्हरेः' इत्यत्र कस्याः सव्यपार्श्वे पूजा, कस्याश्च दक्षिणपार्श्वे पूजेति विशेषबोधकाक्षराणां प्रयोगाभावात् अल्पाक्षरस्य तद्वाक्यस्य बोधनार्थं अथावरणपूजायां 'लक्ष्मीं वामे हरेर्यजेत् । धरां च दक्षिणे पार्श्वे' इति तद्विस्तरो वक्ष्यते । तथा 'हृदयादीस्तथैन्द्र्यादिदिक्षु' (तं.सा.१–६०)इत्यत्र हृदयादिशब्दार्थानां गूढत्वात्तद्बोधनाय 'कृद्धोल्काय महोल्काय वीरोल्काय नमस्ततः । द्युल्काय च नमस्कुर्यात्' इति विस्तरो वक्ष्यते । 'वासुदेवादिकान्दिक्षु' (तं.सा.१–६१) इत्यत्र मायादिरमारूपचतुष्टयपूजायाः सम्प्रदायपरम्पराप्राप्तायाः गूढत्वात् तद्बोधनाय 'मायां जयां चापि कृतिं शान्तिं कोणेषु च क्रमात् ' इति विस्तरः । इत्यादिरूपेण तत्र तत्र विस्तरोपपादने प्रकारो ज्ञातव्यः ।

तदेवं तन्त्रसारोक्तप्रकारेण पीठपूजा कार्येति स्थिते तत्प्रकारस्तु तुलसीपुष्पसहितौ करौ सम्पुटवत्कृत्वा पीठमध्ये परदेवतामावाहयेत् । अत्र परदेवतादीनां देवानामावाहने ओं पूर्वः नमोन्तः चतुर्थ्यन्तः तत्तद्देवताशब्दः मन्त्रः सर्वत्र ज्ञेयः । ओं परदेवतायै नम इत्यादि । तदुक्तं योगदीपिकायाम् – ताराद्या इमे उद्देश्या नत्यन्ता मनवस्स्वयम्(३–१७) । सतारांश चार्कसोमवह्निमण्डलमेव च इति । अस्यार्थः – ताराद्या ओंकारपूर्वाः उद्देश्याः चतुर्थ्यन्ताः नत्यन्ताः नमश्शब्दान्ताः इमे परदेवतादिशब्दाः मनवः मन्त्राः आवाहने पीठपूजायामिति शेषः । अर्कसोमवह्निमण्डलं सूर्यसोमाग्निमण्डलानि सतारांशसतारांशानि ओंकारावयवभूतानि अकारोकारमकारसहितानीति । अत्र 'अष्टाक्षरेण सम्पूज्य प्रथमं देवतां पराम्' इति तन्त्रसारे नारायणाष्टाक्षर-मन्त्रस्य परदेवावाहने मन्त्रत्वमुक्तम् । 'सतारा इमे उद्देश्या नत्यन्ता मनवस्स्वयम्' इति योगदीपिकायां ओं परदेवतायै नमः इति मन्त्रस्य आवाहनमन्त्रत्वमभिहितम् । तदुभयानुसारात् ओं नमो नारायणाय ओं

परदेवतायै नमः इति मन्त्रद्धयमपि परदेवतावाहने पठनीयमिति प्रतिभाति । 'अष्टाक्षरेण'इत्येतत् परदेवतायै नमः इत्यपि व्याचक्षते ।

यद्यपि ध्यानप्रकरणे पीठपूजाया यः क्रमः प्रदर्शितः, स एवात्रापीति न पृथग्दर्शनीयः । तथापि तत्र तत्र वक्तव्यानां प्रागनुक्तत्वात्पुनः प्रदर्श्यन्ते । तत्पीठं यत्र कल्प्यं तत्स्थानमध्ये ओं परदेवतायै नमः ओं नमो नारायणाय इति नत्वा देवस्य सव्ये पीठस्थापनप्रदेशाद्वहिः ओं गुरुभ्यो नमः इति वदेत् । अत्र गुरुत्वेन वायुरेव विवक्षितः । वहुवचनं तु सर्वगुरुत्वादेवेति ज्ञेयम् । देवस्य दक्षिणे पीठस्थापनप्रदेशाद्वहिः ओं सर्वदेवताभ्यो नमः इति नत्वा पुनः सव्ये सर्वगुरुभ्यो नमः सनकाय सनत्कुमाराय सनन्दनाय सनातनाय नमः इति नमेत् । अत्र सर्वदेवताभ्यो नमः सर्वगुरुभ्यो नमः इत्येव मन्त्राकारः । अत एवाह्निकतरङ्गादौ तथैव मन्त्राकारः प्रदर्शितः । तथापि सर्वदेवताशब्देन कियन्तो विवक्षिता इत्यपेक्षायां तद्विवराणाय ओं व्रह्मणे नमः ओं विष्णवे नमः, ओं शिवाय नमः इति क्वचित्पद्धतिविशेषे अभियुक्ताः प्रदर्शयन्ति । तथा सर्वगुरुशव्देन कियन्तो विवक्षिता इत्याकांक्षायां सनकसनत्कुमारादयश्चत्वार एवेति विवरणाय ओं सनकाय नमः ओं सनत्कुमाराय नमः, ओं सनन्दनाय नमः, ओं सनातनाय नमः इति क्वचित्कप्रदर्शनमित्यवधेयम् ।

श्वेताम्वरधरा गौरा गुरवः पुस्कान्विताः ।
व्याख्यानमुद्रया युक्ता ध्यायतो वै निजं हरिम् ।।

ध्यातव्याः पूजनादौ च तद्ध्यानाज्ज्ञानवान्भवेत्

इति वचनोक्तरीत्या तेषां ध्यानं कार्यम् । एवं 'अनुज्ञां भक्तिपूर्वकं आदायैभ्य' इत्युक्तेः गुर्वाज्ञास्वीकारस्य आवश्यकत्वात् । तदर्थं गुरुपूजां कृत्वा पीठं पूजयेत् । तत्र 'देवसाधकयोरन्तः पूर्वा सा दिगिहोच्यते ।'इति वचनात् देवस्य पूजकस्य मध्यभागं प्राचीत्वेन ध्यात्वा तदारभ्य आग्नेयादिदिक्कल्पनां कृत्वा गरुडादिदेवान्पूजयेत् । तथा हि – आग्नेयादिकोणेषु ओं गरुडाय नमः,

ओं वेदव्यासाय नमः, ओं दुर्गायै नमः, ओं सरस्वत्यै नमः, एता पीठपादाधोदेवताः । पुनः आग्नेयादिकोणेषु ओं धर्माधिपतये वृषतनवे रक्तवर्णाय यमाय नमः । ओं ज्ञानाधिपतये सिंहाकारय श्यामवर्णाय वायवे नमः । ओं वैराग्याधिपतये भूताकाराय पीतवर्णाय शिवाय नमः । ओं ऐश्वर्याधिपतये कृष्णवर्णाय गजाकाराय इन्द्राय नमः । एताः पीठपादोर्ध्वदेवताः । अत्र धर्मादीनामाकारवर्णविशेषाः सारसङ्ग्रहे निरूपिताः ।

'धर्मं वृषतनुं रक्तवर्णमादौ प्रपूजयेत् ।
सिंहाकारं ततो ज्ञानं श्यामवर्णं समाहितः ।।

भूताकारं च वैराग्यं पीतवर्णं यजेत्ततः ।
कृष्णवर्णं गजाकारमैश्वर्यं साधु पूजयेत्' ।।

इति । ओं अधर्माधिपतये निर्ऋतये नमः । ओं अज्ञानाधिपतये दुर्गायै नमः । ओं अवैराग्याधिपतये कामाय नमः । ओं अनैश्वर्याधिपतये रुद्राय नमः । एताः पीठफलकदेवताः । एवं परदेवताद्याश्चत्वारः । गरुडमारभ्य रुद्रपर्यन्ताः द्वादशेत्येवं षोडशदेवतासहितं ध्यातं पीठं पृथक् निधाय भूमेरधःस्थितब्रह्मण्ड-खर्परादधस्थलमारभ्य पीठस्थापनदेशपर्यन्तं परमपुरुषमारभ्य मण्डपान्त-मेकैकस्योपरि पूजयेत् । अत्र तन्त्रसारे पीठाधोभागे चिन्तनीयपरमपुरुषादि-कमनुक्त्वा प्राक् पीठपूजाप्रकारकथनं तु प्रथमतः पीठपूजां विधायैवानन्तरं परमपुरुषादिपूजा कार्येति ज्ञापनार्थम् । 'आदौ सिंहासनं ध्यात्वा पूज्यः परमपूरुषः' इत्युक्तेरिति ज्ञातव्यम् । तत्रादौ ब्रह्माण्डखर्परादधः अवग्नी-ग्नभोहङ्कृतिमहत्तत्त्वसत्त्वतमोरजोगुणाख्यनवावरणसहितं ब्रह्माण्डं शिरसि धृत्वा पद्मासनः प्राङ्मुखः सन् यः परमपुरुषो नारायणो वर्तते तं पीठस्थापन-मध्यापेक्षया समानसूत्रे ब्रह्माण्डाधोदेशो पूजयेत् । तथा च तत्क्रमः –

ओं परमपुरुषाय नमः । तदुपरि आधाररूपिण्यै शक्तिनाम्न्यै रमायै नमः । तदुपरि ब्रह्माण्डाधारभूतविष्णुकूर्माय नमः । अण्डान्तश्चागाधजलाधारभूत-विष्णुकूर्माय नमः । तदुपरि तत्पुच्छाश्रितवायुकूर्माय नमः । तदुपरि

तत्पुच्छाश्रितानन्तनामकशेषाय नमः । तदुपरि तत्फणाश्रितसर्वभूतावरपृथिव्याभिमानिन्यै भूम्यै नमः । तदुपरि क्षीरसागराभिमानिने वरुणाय नमः । रमारूपश्वेतद्वीपाय नमः । तदुपरि महते दिव्यरत्नखचितसुवर्णमण्डपाय नमः । इति ।

अत्र ब्रह्माण्डाधारभूतः विष्णुकूर्मः । अण्डान्तश्चागाधजलाधारभूतः अपरः विष्णुकूर्मः । तत्पुच्छाश्रितः वायुकूर्मः । एवं कूर्मत्रयरूपार्थे वायुपुच्छाश्रितः शेषः पृथिवीधारको वर्तते इत्यत्रार्थे च 'विभर्त्यण्डं हरिः कूर्मस्त्वण्डे चाप्युदकं महत् । उदके कूर्मरूपस्य वायुः पुच्छं समाश्रितः । वायोः पुच्छं समाश्रित्य शेषस्तु पृथिवीमिमाम् । विभर्ति तस्यां च जगदिदं सर्वं प्रतिष्ठितम् ।(३–२–३) इति वृहदारण्यभाष्योदाहृतं वैभववचनं मानम् । वायोः कूर्मरूपमस्तीत्यत्रार्थेऽपि स्पष्टं

स एव कूर्मरूपेण वायुरण्डोदके स्थितः ।<br>
विष्णुना कूर्मरूपेण धारितोऽनन्तनामकः ।।

अप्सु पादा हि चत्वारो ह्यण्डेदे कोणसंस्थिताः ।<br>
उरस्तु भूमिसंश्लिष्टमतिरिच्य भुवः पुनः ।।

पार्श्वतः पृष्ठतश्चैव शिरश्चोदकसंस्थितम् ।<br>
आकाशमुदरे तस्य द्यौः पृष्ठे संस्थिता विभोः ।।

एवं विद्वांस्तु यत्रैति तत्रैव प्रतितिष्ठति । (३–२–३)

इति तत्रैवोदाहृतं प्रभञ्जनवचनं मानमित्यवगन्तव्यम् । उदके क्षीरसागराभिमानिने वरुणाय नम इति ध्यात्वा क्षीरसागरोपरि हृत्पद्ममेकांशेन वहिरागतं भावयित्वा तदुपरि सूर्यमण्डलं तदुपरि सोममण्डलं तदुपरि हुताशनमण्डलं च ध्यात्वा ज्वालायां रमारूपश्वेतद्वीपपूजा कार्या । तन्त्रसारे 'पृथिवी क्षीरसागरः । श्वेतद्वीपो मण्डपश्च' इति क्षीरसागरानन्तरं श्वेतद्वीपस्य पूज्यत्वोक्तावपि तत्त्वसारे ध्यानप्रकरणे क्षीरसागरपूजानन्तरं हृत्पद्मादि-

चतुष्टयपूजामभिधाय तदुपरि श्वेतद्वीपपूजायाः प्रतिपादनात् । न च ध्यानकाले हृत्पद्मपूजायाः विहितत्वाभिप्रायेण तत्त्वसारस्य प्रवृत्तत्वेऽपि प्रतिमापूजाकाले तत्पूजा न विहितेति वाच्यम् । 'क्षीरसागर एव च । श्वेतद्वीपो मण्डपश्च' (१–५४) इति तन्त्रसारस्य ध्यानप्रतिमापूजयोरविशेषेण प्रमाणतया तत्र ध्यानकाले क्षीरसागरोपरि हृत्पद्ममेकं, तदुपरि सूर्यमण्डलं द्वितीयं, तदुपरि सोममण्डलं तृतीयं, तदुपरि हुताशनमण्डलं चतुर्थं इति आधारचतुष्टयपूजायाः शेषपूरणं, प्रतिमापूजायां तु नेत्यत्र नियामकविशेषाभावात् मानसपूजाकाले हृत्पद्मस्य अधश्चिन्तितानां परमपुरुषादीनां चात्रावाहनासम्भवाच्चेति ज्ञातव्यम् । तथा च क्षीरसागरोपरि हृत्पद्मं ध्यात्वा तदुपरि सूर्यमण्डलं तदुपरि सोममण्डलं तदुपरि हुताशनमण्डलं ततो रमारूपश्वेतद्वीपाय नमः इति ध्यायेत् । तदुपरि महते दिव्यरत्नखचितसुवर्णमण्डपाय नमः इति ।

एवमण्डपपर्यन्तं सम्पूज्य तन्मण्डपमध्ये पूर्वं मनसा रचितं चतुष्कोण-दिव्यरत्नखचितसुवर्णमयपीठं निधाय तन्मध्ये कन्दनालसहितषड्दलपद्मात्मिकायै श्रियै नमः इति षड्दलपद्मं ध्यायेत् ।

> चतुष्कोणं तु पीठं स्यात् षड्कोणं तेषु मध्यतः ।
> तन्मध्येऽष्टदलं पद्मं तत्र पद्मेशमर्चयेत्

इति तन्त्रसारवचनात् । वचने षट्कोणमित्यस्य कोणषट्कोपेतं पद्ममित्यर्थः । पृष्ठकोणेषु पद्मस्य इत्यादिप्रयोगात् । तदनुरोधेन तन्त्रसारटिप्पण्यां श्रीमच्छलारीशेषाचार्यैः तथैव व्यवहाराच्च । आह्निकतरङ्गे तु षट्कोणशब्देन कोणषट्कोपेतः पद्माधारभूतः भूतप्रदेश इत्यङ्गीकृतम् । पीठोपरि षट्कोणपद्मभूमिं ध्यात्वा इति ध्यानप्रकरणे तद्वाक्यसद्भावात् । न च तत्रापि अष्टकोणेति पद्मस्यैव विशेषणं न भूमेरिति वाच्यम् । तत्रैवोत्तरत्र षट्कोणभूमौ अष्टदलं रमारूपं पद्मं ध्यात्वेति पद्मघटितस्यैवषट्कोण-भूमिशब्दस्यप्रयोगात् । कलशपूजाप्रकरणोक्तपीठपूजायामपि तथैव प्रतीयमानत्वाच्च । एवं च सद्ग्रहादिग्रन्थानुसारेण पद्मेऽपि षट्कोणवत्त्वस्याबाधेन

कोणशब्दस्य तद्गतदलेषु लक्षणामभिप्रेत्य सदाचारदर्पणादौ षड्दलं पद्ममिति बहुशो व्यवहारात् षड्दलपद्ममेव पीठे पूजयित्वा तत्राष्टदलपद्मं प्रपूजयेत् ।

एवं च षड्दलपद्मं ध्यत्वा तदुपरि अं सूर्यमण्डलाय नमः । उं सोममण्डलाय नमः । मं हुताशमण्डलाय नमः इति मण्डलत्रयमेकैकस्योपरि ध्यायेत् । एवमेवाह्निकतरङ्गे कलशपूजाप्रकरणे प्रतिपादितत्वात् । यथोक्तं– एवं सूर्यादीन् त्रीन् आसने उपर्युपरि ध्यायेदिति । आसने आसनशब्दवाच्यपीठस्योपरितने षड्दलपद्मे इत्यर्थः । तत्राह्निकतरङ्गे तु मण्डपपद्मयोर्मध्ये पीठस्यानुक्तावपि आसने उपर्युपरीत्यनुवादबलादासनशब्दवाच्यपीठस्य स्थापनं मण्डपोपरि षड्दलपद्माधारतया कार्यमिति विधिरनुमीयते एव । अत एव तत्र ध्यानप्रकरणे मण्डपमध्ये पीठं ध्यात्वेत्युक्तम् । अत्र 'पृष्ठकोणेषु पद्मस्य सत्त्वादीन्क्रमशो यजेत् । गुणान्यजेत्ततः पूर्वं सूर्यसोमाग्निमण्डलान्' इति सङ्ग्रहवचनानुसारेण षट्कोणेषु मध्ये पुरोभागस्थकोणत्रये सत्त्वाद्यभिमानि-श्रीरूपादिपूजां च प्रतिपादयन्तोऽपि यदाह्निकतरङ्गकाराः मण्डलानामुपर्युपरि पूजां च प्रतिपादितवन्तः, तदा उपर्युपरि पूजापि अवश्यं कार्येति प्रतीयते । तन्त्रसारटिप्पण्यां तु सङ्ग्रहोक्तप्रकारेणैव मण्डलानां पूजा । न तु उपर्युपरि पूजापि इत्यभिधीयते ।

मध्ये कन्दं मूलनालं पद्मयन्त्रं सकेशरम् ।
कर्णिकामध्यदेशे तु सूर्यसोमाग्निमण्डलान् ।।

एतान्वै मण्डलाधीशानुपर्युपरि पूजयेत् ।

इति विष्णुतन्त्रवचनविरोध इत्याशङ्क्य वचनस्य

'हृत्पुण्डरीकमध्यस्थमूर्ध्वनालमधोमुखम् ।
ध्यात्वोर्ध्वमुखमुन्निद्रमष्टपत्रं सकर्णिकम् ।।

कर्णिकायां न्यसेत्सूर्यसोमाग्नीनुत्तरोत्तरम् ।
वह्निमध्ये स्मरेद्रूपं ममैतद् ध्यानमङ्गलम् ।।

इति एकादशस्कन्दे तद्ध्यानप्रकरणे उक्तेः ध्यानविषयकत्वमेव । न तु प्रतिमापूजाविषयकत्वम् । प्रतिमापूजा तु सङ्क्षेपोक्त एव पूजाप्रकार इत्युक्तम् । अत्र आह्निकतरङ्गकाराणां तन्त्रसारटिप्पणीकाराणां च गुरुशिष्यभावसद्भावेऽपि एवं विसंवादः किम्मूलक इति न जानीमः । कलशपूजास्थपीठपूजाप्रकारस्यैव प्रतिमापूजायामतिदेशस्य कृतत्वेन तयोः पीठपूजयोर्भेदाभावात्, अत्र ध्यानकाले एवावश्यं कर्तव्यतया शिष्टैः तन्त्रसारटिप्पण्युक्तां उपर्युपरि पूजां ध्यानप्रकरणे स्वयमनभिधाय कलशपूजाप्रकरणस्थपीठपूजायां तदभिधानात् वहिः पूजायामपि साऽवश्यं कार्येति प्रतीयते इत्यादि ज्ञातव्यम् ।

तथा च षड्दलपद्मं ध्यात्वा षट्सु दलेषु देवस्याग्रेतनदक्षिणदले ओं अं सूर्यमण्डलाय नमः । देवस्याग्रेतनवामदले ओं उं सोममण्डलाय नमः । देवस्य सम्मुखदले ओं मं हुताशमण्डलाय नमः इति देवपुरोभागे दीपरूपतया विद्यमानानि त्रीणि मण्डलानि नत्वा देवस्य पृष्ठभागस्थेषु त्रिषु दलेषु वामभागदले सत्त्वाभिमानिन्यै श्रियै नमः । देवस्य दक्षिणभागदले रजोभिमानिन्यै भूम्यै नमः । देवस्य पृष्ठभागदले तमोभिमानिन्यै दुर्गायै नमः इति नत्वा पूर्वादिदिक्षु ओं आत्मने नमः ओं अन्तरात्मने नमः । ओं परमात्मने नमः । ओं ज्ञानात्मने नमः । इति सोपानदेवता नत्वा तस्मिन्नेव षड्दलपद्मे पुनरष्टदलपद्मं ध्यात्वा पद्मदलेषु सूर्यं द्वाविंशकेशरेषु सोमं कर्णिकायां च हुताशनं च ध्यायेत् । यद्यपीदं ध्यानप्रकरणे एवोक्तम् । तथाप्याह्निक-रङ्गोक्तरीत्या प्रतिमापूजायामभिप्रेतमेव । प्रत्येकं पद्मस्याष्टदलेषु ओं विमलायै नमः । ओं उत्कर्षिण्यै नमः ओं ज्ञानायै नमः । ओं क्रियायै नमः । ओं योगायै नमः । ओं प्रह्व्यै नमः । ओं सत्यायै नमः । ओं ईशानायै नमः । मध्ये आसनरूपायै ओं अनुग्रहायै नमः । इति पद्माष्टदलेषु मध्ये चेति स्थाननवके विमलाद्यनुग्रहान्ताः नवशक्तीः पूजयेत् । 'गृहीतचामरा दिव्या विमलायाश्च शक्तयः' इति वाशिष्ठवचनात् एताश्चामरहस्ता इति विशेषोऽनुसन्धेयः । हरेः स्वरूपभूतानि विमलादिनामकानि नवरूपाणीव

रमास्वरूपभूतानि, ब्रह्मणो वायोः शेषस्य गरुडस्य च स्वरूपभूतानि विमलादिनामकानि नवरूपाण्यपि पूजयेत् । विशेषान्तरमत्रानुसन्धेयम् । तदुक्तं षष्ठस्कन्धतात्पर्ये

इच्छादित्वेन त्रिविधा विमलायाश्च शक्तयः ।
विष्णोस्स्वरूपभूतानि ताभ्यस्तन्नामकाः पराः ।।

जायन्ते तत्प्रसादेन ताश्च पीठे प्रपूजयेत् ।
तद्भिन्नजीवास्तस्यैव प्रसादत्तत्समीपगाः ।।' (६–४–२७)

विष्णोश्श्रियो ब्रह्मणश्च वायोस्सङ्कर्षणस्य च ।
गरुडस्य च तन्त्रोक्ताः प्रत्येकं नवमूर्तयः ।।

पूज्यास्सात्वतमन्त्रेण तत्राद्या मूर्तयो हरेः ।
प्रधानास्ता हि सर्वासां मूर्तीनां हरिमूर्तयः ।।

इति । एवं नवशक्तिपूजानन्तरं तमोरजस्सत्वमिति क्रमेण गुणत्रयाभिमानिरमारूपत्रयपूजा कार्येत्युक्तमाह्निकतरङ्गे । किमुपरीत्याशङ्क्य ध्यानप्रकरणे कर्णिकोपरीत्युक्तं तत्रैव । तत्रापि कर्णिकायाः परम्परयैवाधारत्वमित्यभिप्रेत्य तद्विवृतं कलशपूजाप्रकरणे अग्निमण्डलोपरीति । अष्टदलपद्मस्य कर्णिकायां यद्धुताशनमण्डलं तदुपरि तज्ज्वालायामित्यर्थः इदमपि वाक्यं मन्दिरे मणिमालेत्यादिवत् परम्परामभिप्रेत्यैव । तथा चाग्निमण्डलोपरि तज्ज्वालायां मध्ये आसनरूपा या अनुग्रहा तदुपरीत्यर्थः । तथा चानुग्रहोपरि तमोऽभिमानिन्यै दुर्गायै नमः । रजोभिमानिन्यै भूम्यै नमः । सत्वाभिमानिन्यै श्रियै नमः इति नत्वा तदुपरि

विष्णोरासनभूताय दिव्यरत्नमयाय च ।
प्रधानपुरुशेषाय महापीठाय ते नमः ।।

इति मन्त्रानुचार्य कुण्डलरूपेणासनभूताय फणारूपेण उपबर्हणच्छत्ररूपाय-हरेर्योगपीठस्वरूपाय श्रीमदनन्ताय नमः । इति नत्वा तदुपरि

सत्त्वायात्मकरमारूपचित्रासनाय नमः इत्युक्त्वा तदुपरि वितानदेवतायै श्रियै नमः । कशिपुदेवतायै भूम्यै नमः । उपबर्हणदेवतायै दुर्गायै नमः । इति नमेत् । इति पीठपूजाविधिः ।

अत्र वितानकशिपूपबर्हणदेवतानां श्रीभूदुर्गाणामधिकानां तत्त्वसारे ध्यानप्रकरणे पूजायाः कर्तव्यतयोक्तत्वात् तासामपि पूजा अवश्यं कर्तव्येति ज्ञातव्यम् । अत्र परदेवतामारभ्य उपबर्हणदेवताभूतनां श्रीभूदुर्गाणां अधिकानां तत्वसारे ध्यानप्रकरणे पूजायाः कर्तव्यतयोक्तत्वात् तासामपि पूजा अवश्यं कर्तव्येति ज्ञातव्यम् । अत्र परदेवतामारभ्य उपबर्हणदेवताभूतदुर्गापर्यन्तानां सम्यक् परिगणने सति एकोत्तरसप्ततिसंख्याका देवता भवन्ति । तथा हि – परदेवता आद्या । बहुवचनान्तगुरुशब्दवाच्यो वायुर्द्वितीयः । सर्वदेवताशब्दवाच्याः ब्रह्विष्णुशिवाख्यास्त्रयः । सर्वगुरुशब्दवाच्याः सनत्कुमारसनकसनन्दनसनातनाख्याश्चत्वारः । एवं रीत्या परदेवतामारभ्य सनातनान्ताः अनुज्ञातारो गुरवो नवसंख्याका भवन्ति । ते हि पीठदेवता इति व्यवह्रियन्ते । एवमाग्नेयादिकोणेषु गरुडवेदव्यासदुर्गासरस्वत्याख्याश्चत्वारः पीठपादाधोदेवताः । तेष्वेव यमवायुशिवेन्द्राश्चत्वारः कलशदेवताः इत्येते द्वादशदेवता भवन्ति । एवं परमपुरुषः प्रथमः । तदुपरि आधाररूपिणी शक्तिनाम्नी रमा द्वितीया । तदुपरि ब्रह्माण्डाधारभूतो विष्णुकूर्मस्तृतीयः । अण्डान्तश्चागाधजलाधारभूतो विष्णुकूर्मश्चतुर्थः । तदुपरि तत्पुच्छाश्रितो वायुकूर्मः पञ्चमः । तदुपरि तत्फणाश्रितः अनन्तनामकः शेषः षष्ठः । तदुपरि तत्फणाश्रिता भूः सप्तमी । तदुपरि क्षीरसागराभिमानी वरुणः अष्टमः इत्यष्टौ देवताः । वरुणोपरि प्राग्विकासीकृतं हृत्पद्मं नवमम् । तत्कर्णिकायां सूर्यमण्डलं दशमम् । तदुपरि सोममण्डलमेकादशम् । तदुपरि हुताशमण्डलं द्वादशम् । तदुपरि श्वेतद्वीपस्त्रयोदशः । तदुपरि दिव्यरत्नमयो मण्डपश्चतुर्दशः । इति परमपुरुषमारभ्य मण्डपान्ताश्चतुर्दशदेवताः साक्षात्परम्परया पीठाधारदेवता भवन्ति । तदुपरि मनसा रचितः पीठः प्रथमः । तदुपरि षड्दलपद्मं द्वितीयम् ।

तत्कर्णिकायां सूर्यमण्डलं तृतीयम् । तदुपरि सोममण्डलं चतुर्थम् । तदुपरि हुताशमण्डलं पञ्चमम् । तदनन्तरं षट्सु पद्मदलेषु पूज्याः षड्देवताः आत्मादयश्चत्वारः । एते पञ्चदशदेवता भवन्ति । तथा षड्दलपद्मोपरि हुताशमण्डलज्वालायां अष्टदलपद्ममेकम् । दलेषु सूर्यो द्वितीयः । केसरेषु सोमस्तृतीयः । कर्णिकायां हुताशनश्चतुर्थः । प्रत्येकं दलेषु मध्ये च विमलाद्या नवदेवताः । अनुग्रहोपरि तमोभिमानिनी दुर्गा एका । रजोभिमानिनी भूः द्वितीया । सत्त्वाभिमानिनी श्रीः तृतीया । तदुपरि अनन्तश्चतुर्थः । तदुपरि रमारूपं चित्रासनं पञ्चमम् । तदुपरि तत्वसारे पूज्यत्वेनोक्तानां वितानकशिपूवर्हणदेवतानां मध्ये वितानदेवता श्रीः षष्ठी । कशिपुदेवता भूः सप्तमी । उपवर्हणदेवता दुर्गा अष्टमी इत्यष्टौ देवता भवन्ति । एवं च परदेवतामारभ्य सनातनान्तानां नवसंख्यानां देवानां गरुडमारभ्य रुद्रपर्यन्तानां च द्वादशदेवानां मेलने कृते सति एकविंशतिदेवताः भवन्ति । तदनन्तरं परमपुरुषमारभ्य क्षीरसागरान्तदेवताष्टकस्य हृत्पद्मादिमण्डपान्त-देवताषट्कस्य मेलने चतुर्दशदेवता भवन्ति । एतासां पूर्वोक्तैर्मेलने कृते सति पञ्चत्रिंशद्देवता भवन्ति । तदनन्तरं मण्डपमध्ये स्थापनीयं पीठमारभ्य ज्ञानात्माख्यसोपानदेवतापर्यन्तं परिगणने पञ्चदशदेवता भवन्ति । तदनन्तरं अष्टदलमारभ्यानुग्रहान्तदेवानां परिगणने त्रयोदशदेवता भवन्ति । अनुग्रहोपरि दुर्गापर्यन्तदेवानां परिगणने अष्टदेवता भवन्ति । एवं चैतैः षट्त्रिंशद्देवता भवन्ति । तथा च तासां षट्त्रिंशद्देवताभिः परिगणने एकोत्तरसप्ततिदेवता भवन्ति । तन्त्रसारे सप्तचत्वारिंशद्देवतानामुक्तत्वेऽपि तस्योपलक्षणत्वेन प्रवृत्तेरभिप्रेतत्वान्न विरोध इति सर्वमवदातम् ।

एवं प्रासङ्गिकं निरूप्य प्रकृतमनुसरति पीठपूजामिति ।

**पीठपूजां विधायाथ तत्रावाह्येति सूत्रतः ।**
**हरिमावाहयेद्भक्त्या तद्विधिः प्रोच्यतेऽधुना ॥**

अत्र पीठपूजामित्यतः पूर्वं प्रथमं हृत्पद्मं विकास्य तत्र पीठावरणदेवता-सहितं श्रीहरिं मनसा षोडशोपचारैः सम्पूज्येति वाक्यशेषः । हृत्पद्मविकसन-प्रकारश्चानुपदमेव वक्ष्यते । इदं च मानसपूजानुष्ठानं यदा प्रातराह्निकान्त्यभागे ध्यानकाले मानसपूजारहितमेव ध्यानं अनुष्ठीयते तदैव । यदा च मानसपूजासहितमेव प्रातरनुष्ठीयते तदा पीठपूजातः पूर्वं तदनुष्ठानं नात्यावश्यकम् । परं हृत्पद्मविकसनं तु कार्यमेव । तदभावे भगवत इव पीठदेवानामपि बहिर्निस्सरणे उपायाभावात् । 'अथाचान्तःपुरे विष्णोः' (३–१) इति योगदीपिकायां अन्तःपूजितस्य विष्णोरेक्यस्यैव बहिः पूजाया उक्तत्वेऽपि पीठावरणदेवान्विना विष्णुमात्रपूजाया निषिद्धत्वेन बहुतरतान्त्रिकैर्विष्णो-र्मानसपूजायाः पीठावरणदेवैस्सहैव कर्तव्यतया समर्थितत्वेन च तत एव तेषां पूजासिद्धौ बहिरपि तेषामेव पूजावगमात् । एवं च प्रातः ध्यानकाले विकसितस्यापि हृत्पद्मस्यापि माध्याह्निकस्नानार्थं गमनागमनप्रयुक्तशरीर-चलनेन पुनर्मुकुलीभावेऽपि माध्याह्निकपूजारम्भे सति मानसपूजातः पूर्वं वा पीठपूजातः पूर्वं वा विकसितस्य हृत्पद्मस्य देवपूजासमाप्तिपर्यन्तं मध्ये क्वापि पुनर्विकसनं न कार्यम् । मुकुलीभावप्रापकस्य गमनागमनप्रयुक्तशरीर-चलनस्यासम्भवेन उद्वासनपर्यन्तं तथैवावस्थानोपपत्तेरित्यवधेयम् । एवं शरीराशक्त्या मध्याह्ने एकमेव स्नानं कृतं, नापि तदा जपार्थं पृथगुपवेशनस्थले ध्यानप्रवचनान्तमाह्निकमनुष्ठायैव देवगृहं प्रविशेत् । तत्र ध्यानकाले मानसपूजानुष्ठाने तस्मान्निर्गत्य देवगृहं प्रति गमने प्रवेशकाले शरीरस्खलनात् हृत्पद्मस्य मुकुलितत्वेन पीठपूजार्थमेव तद्विकसनं कार्यम् । तदननुष्ठाने तु मानसपूजार्थं तद्विकसनं कार्यम् । विकसितस्य तस्य देवपूजां समाप्योद्वासनपर्यन्तं तथैवावस्थानोपपत्तेर्न क्वापि विकसनं कार्यमित्यवधेयम् । तथा च हृत्पद्मं विकास्य पीठपूजां विधाय, अथ पीठपूजानन्तरं भक्त्या हरिमावाहयेदित्यन्वयः । तद्विधिरित्यतः पूर्वं 'अतस्तज्ज्ञानाय' इति शेषः । यतो हरिमावाहयेत् अतः तज्ज्ञानाय आवाहनस्वरूपज्ञानाय तद्विधिः प्रोच्यते इत्यर्थः ।

ननु नावाहनस्वरूपज्ञानाय आवाहनविधेः प्रतिपादनमुचितम् । 'तत्रावाह्य' इति तन्त्रसारेणैव तत्स्वरूपज्ञानसम्भवात् इत्यत उक्तं – तत्रावाह्येति । सूत्रपदं सूत्रतुल्यत्वपरम् । तथा च तत्रावाह्येतीत्यंशस्य सूत्रतुल्यत्वात्सूत्राणामिव अल्पाक्षरत्वादिति यावत् । तेनावहानस्वरूपस्य सम्यग्ज्ञानासम्भवात् तदर्थं तद्विधिप्रतिपादनमुचितमिति भावः ।

**हृत्पद्मविकसनविचारः**

नन्वास्तां तावदयं 'तद्विधि प्रोच्यतेऽधुना' इति प्रतिज्ञा । तत्र हरेरावाहनात्पूर्वभाविपीठपूजार्थं हृत्पद्मविकसनं कार्यमिति यदुक्तं, तदनुपपन्नम् । अधोमुखस्य हृत्पद्मस्य सन्मुखत्वासम्भवात् । विकसनं प्रति तत्रापि कारणान्तरापेक्षणादित्यतः तत्स्वरूपनिरूपणपूर्वकमुभयत्र कारणविशेषप्रकारं दर्शयति –

**अधोमुखं हृत्कमलं वायुबीजेन चोन्मुखम्(सन्मुखम्) ।**
**कुर्यात्ततोऽस्य मुकुलं ज्ञानार्केण विकासयेत् ।।**

अन्तः किञ्चित्कुञ्चितपत्राग्रमित्यर्थः । एवं च सति कर्णिकायां भगवत उपवेशनमपि समञ्जसं भवति । केचित्तु अधोमुखमित्यस्य यथाश्रुत एवार्थः । 'हृत्पुण्डरीकमन्तस्स्थमूर्ध्वनालमधोमुखम् । ध्यात्वोर्ध्वमुखमुन्निद्रम्' (भा–११–१४–३६)इत्येकादशस्कन्धे वस्तुतः अधोमुखत्वोर्ध्वनालत्वयोः उक्तः । तादृशस्यापि वायुबलेन ध्यानकाले पूजाकाले च ऊर्ध्वमुखत्वाधोनालत्वयोः करणसम्भवादिति वर्णयन्ति । तेषां पक्षे कर्णिकायां भगवत उपवेशनप्रकारः कथं चिन्तनीय इति विचार्यमस्ति । वायुबीजेन यमिति वायुबीजाक्षजपेन सम्मुखं कुर्यात् । ततः अस्य मुकुलं 'प्रणवेनोन्मुखीकृत्य' इति विशेषवचनात् प्रणवेनोन्मुखीकृत्येति शेषः । ऊर्ध्वमुखाग्रयुक्तपत्रविशिष्टं कृत्वेति तदर्थः । वायुबीजेनत्यस्यानुवृत्तिं उन्मुखीकृत्येत्यस्य एकस्यैव विशेषस्य ऊर्ध्वमुखीकृत्येत्यर्थकस्य पूरणं चाभिप्रेत्य वायुबीजेन सम्मुखीकरणवत्

उन्मुखीरकरणमपि तेनैवेत्यप्याहुः । ज्ञानार्केण विकासयेत् विकसितं भावयेदित्यर्थः । ननु इदं हृत्पद्मविकसनं पीठपूजातः पूर्वमेव अनुष्ठीयमाना या मानसपूजा, तदारम्भे कर्तव्यमिति वक्तव्यम् । तदा मानसपूजाया अवश्यमनुष्ठेयतया तस्या हृत्पद्मविकसनं विना अनुष्ठानायोगात् । एवं च सति पीठावरणदेवानामावाहनस्यैव तत्पूजाशब्दार्थत्वोपपत्तेः ध्यानमेव पूजाशब्दार्थ इति प्राङ्निष्टङ्कितमनुपपन्नमेव । तेषां वहिर्निस्सरणे उपायाभावात् । न च मानसपूजारम्भे हृत्पद्मविकासोक्तौ तदा विकसितस्यापि हृत्पद्मस्य मानसपूजासमाप्त्यनन्तरं पुनर्मुकुलीभूतत्वात् तादृशस्य पीठपूजासमये विकसनाय तदारम्भेऽपि तदवश्यं वक्तव्यमेव । एवं पीठपूजासमाप्तौ सत्यां पुनर्मुकलीभूतस्य हरेरेवावाहनसमये विकसनाय तदारम्भेऽपि तदवश्यं वक्तव्यमेव । एवं हरेरावाहनानन्तरं श्रीहरेरर्घ्यादिद्वादशोपचारपूजापर्यन्तं तथैवावस्थानासम्भवेन मध्ये मुकुलीभूतस्य आवरणपूजासमये विकसनाय तदारम्भेऽपि तदवश्यं वक्तव्यमेव । एवं च हृत्पद्मविकसनस्य वहुषु स्थलेषु वक्तव्यत्वात् किमर्थं मानसपूजारम्भ एव तद्वक्तव्यत्वे निर्वन्धकरणमिति वाच्यम् । शरीरस्य इतस्ततो धावनस्यैव मुकुलीभावप्रापकतया, तत्तत्कर्मसमाप्तेः तदप्रापकतया प्रापकत्वेनाभिमतस्य शरीरधावनस्य निश्चलतया उपविष्टे पूजके असम्भवेन मानसपूजारम्भे विकसितस्य हृत्पद्मस्य प्रतिमान्तर्गतहरेः षोडशोपचारपूजास्वीकारानन्तरं भाविहृत्पद्म-प्रवेशनपर्यन्तं तथैवावस्थानोपपत्तेः । न च ग्रन्थकृतां मानसपूजा-नुष्ठानमेवानभिप्रेतम् । ततो हृत्पद्मविकसनोक्तिर्युज्यत इति वाच्यम् । तथा सति प्रागुदाहृतयोगदीपिकावचनविरोधप्रसङ्गादिति चेत् सत्यम् । अयमिहाभिप्रायो ग्रन्थकृनाम् । वाह्यपूजायामेव नियमेन हृत्पद्मविकसनं कार्यं नान्तरपूजायामिति । अत एव तन्त्रसारटिप्पण्यां पीठपूजातः पूर्वं मानसपूजा कार्येत्युक्त्वापि तदा हृत्पद्मविकसनमनभिधाय प्रथमं मानसपूजा, अनन्तरं पीठपूजा, तदनन्तरं हरेरावाहनमिति क्रममवलम्व्य हरेरावाहनसमय एव

तद्ग्रन्थानुसारात् हृत्पद्मविकसनं निरूपितम् । अत एव नियमाभावादेव हृत्पद्मविकसनस्य कृताकृतत्वात् आह्निकतरङ्गे ध्यानार्थं हृत्पद्ममविकसनस्य ''ध्योत्वोर्ध्वमुखमुन्निद्रं'' इति वचनानुसारेण कर्तव्यताप्रतिपादनेऽपि सदाचारदर्पणे 'पुरुषं चिन्तयेत्परम् । अधोमुखे हृत्कमले कर्णिकाया भृगूत्तम' इति वचनानुसारेण हृत्पद्मविकसनं विनापि ध्यानानुष्ठानप्रकार-निरूपणं कृतम् । पीठादिदेवानां च तत्र तत्र स्थानेषु विद्यमानानामेव ध्यानरूपैव पूजा कार्या । न त्वावाहनरूपा । अतो न तेषां पृथगावाहनप्रसक्तिरित्यभिप्रेत्य एतद्ग्रन्थप्रवृत्तेर्न कश्चिद्दोष इत्यवधेयम् ।

हृत्कमलविकासनानन्तरं किं कार्यमित्यत आह – तत्कर्णिकास्थितं इति ।

**तत्कर्णिकास्थितं देवं नारायणमनामयम् (अजं विभुम्) ।**
**उद्यद्भास्वदिति ध्यात्वा सपुष्पतुलसीकरः ॥**

**कृताञ्जलिपुटो भूत्वाऽऽत्मेत्येकामृचं पठेत् ।**
**मूलमंत्रं ततो जप्त्वा यथात्मार्थं प्रपूजयेत् ॥**

एवं हृत्कमलं 'यं' इति वायुबीजेनाभिमुखं कृत्वा प्रणवेनोर्ध्वमुखाग्र-पत्रविशिष्टं कृत्वा ज्ञानार्केण विकसितं भावयित्वा तत्कर्णिकास्थितं नारायणं 'उद्यद्भास्वदिति' ध्यात्वा सपुष्पतुलसीकरः कृताञ्जलिपुटो भूत्वा यथात्मार्थं प्रपूजयेत् तदा 'आत्मा देवानां' इत्यस्य वातायन ऋषिः, श्रीवासुदेवो देवता, त्रिष्टुप् छन्दः, स्वबिम्बमूर्त्यावाहने विनियोगः ।

आत्मा देवानां भुवनस्य गर्भो यथावशं चरति देव एषः ।
घोषा इदस्य शृण्विरे न रूपं तस्मै वाताय हविषा विधेम ॥
(ऋ.सं.१०–१६८–४)

इति 'ओं नमो नारायणाय ओं' इति मूलमन्त्रं 'सहस्रशीर्षा' इति ऋचं चोच्चार्य 'एहि एहि मम हृत्पद्मगत श्रीपुरुषोत्तम हृत्कमलस्थिश्रीमुख्य-प्राणान्तर्गत श्रीलक्ष्मीनारायण एहि एहि' इति द्विरुच्चार्य सुषुम्नानाडीमार्गेण

ब्रह्मरन्ध्रमानीय वामनासापुटात् वहिर्निर्गतं भावयित्वा 'आवाहयामि पीठे त्वां प्रतिमायां रमापते' इति द्विरुचार्यैवं 'भो लक्ष्मीपते त्वां पीठे प्रतिमायामावाहयामि इति द्विरुचार्य आवाहनमुद्रां प्रदर्श्य 'आवाहितो भव' इत्युक्त्वा आवाहयेत् । अत्र आवाहनमुद्राया वक्ष्यमाणमुद्राणां चोपास्यप्रतिमायां एकत्र प्रदर्शनं कृत्वा अवशिष्टप्रतिमान्तर्गतभगवद्रूपाणां उपास्यप्रतिमान्तर्गतविम्वरूपेण ऐक्यानुसन्धानं कार्यम् । तेनावशिष्टप्रतिमास्वपि आवाहनमुद्राणां प्रदर्शितप्रायत्वान्न तासु पृथक् मुद्राप्रदर्शनायासः सम्पादनीयः । एवं तत्त्वन्यास मातृकान्यास नारायणाष्टाक्षरमन्त्रानपि उपास्यप्रतिमायामेकत्र कृताश्चेत् ऐक्यानुसन्धानेन सर्वप्रतिमास्वपि कृतप्राया इति न तत्पृथक्करणायायास इति सम्प्रदायविदः । अत्र 'सालिग्रामे स्वयंव्यक्ते नावाहनविसर्जने' इति निषेधात् सालिग्रामे आवाहनाभावेऽपि तत्प्रतिमायामावाहनमस्त्येव । 'हस्तादियुक्तप्रतिमा सालिग्रामकृता च या । तस्यामग्रावपि स्यातामावाहनविसर्जने' इति वौधायनोक्तेः ।

अत्रोपास्यप्रतिमायामपि विम्वमूर्त्यावाहनं कुर्वाणः परिदृश्यमानप्रतिमा एकं गोलकम् । तदन्तर्गतविश्वकर्मनिर्मिता तेजोमयी प्रतिमा अपरं गोलकम् । इति गोलकद्वयमनुसन्धायैव तदन्तः विम्वरूपस्य हरेरावाहनं कार्यम् । वायुलक्ष्म्योः तेजोमयीत्वेनानुगमात् । परिदृश्यमानप्रतिमाविवक्षाभावे तु परिदृश्यमानप्रतिमायां वायुरेकः, तदन्तः लक्ष्मीः परा इति गोलकद्वयमनुसन्धाय तत्र विष्णुं पूजयेत् । तदा लक्ष्मीवाय्वोस्तेजोमयीत्वेनानुगमानङ्गीकारात् । विष्णुप्रतिमायामिव रमाप्रतिमायां मुख्यप्राणप्रतिमायां च परिदृश्यमान-प्रतिमाविवक्षापक्षे तदभावपक्षे वा गोलकद्वयमेवोक्तरीत्या ज्ञेयम् । शिवाद्यन्यदेवताप्रतिमासु च परिदृश्यमानशिवादिप्रतिमा एका, तदन्तस्तत्तजोमयी अपरा, तदन्तः शिवादिरिति गोलकत्रयं ध्यात्वा तदन्तः विष्णोः पूजनम् । परिदृश्यमानाविवक्षायां तु परिदृश्यमानप्रतिमान्तः वायुः तदन्तः लक्ष्मीः तदन्तः शिवादिरिति गोलकत्रयमनुसन्धेयम् । 'गोलकद्वितयं विष्णोस्त्रितयं

वापि परिकीर्तितम्' (३-१३९) इति तन्त्रसारे भगवत्पादोक्तेः । प्रतिमैव विष्णुरित्यनुसन्धाने महाऽनर्थश्रवणात् गोलके विष्णुरित्यनुसन्धानं कार्यम् । तथा च श्रुतिः– 'अर्चत प्रार्चत प्रियमेधासो अर्चत । अर्चन्तु पुत्रका उत पुरं न उत धृष्ण्वर्चत' (८-६९-८)इति । एतन्मन्त्रार्थो भगवत्पादैः कर्मनिर्णये उक्तः । हे प्रियमेधासः – सम्यग्ज्ञानिनः स्थलप्रतिमापूजकाः अर्चत, प्रार्चत – प्रकर्षेण अर्चत । हे पुत्रकाः बाला अल्पज्ञानिनः लघुप्रतिमापूजकाः । यूयं अर्चत अन्ये च अर्चन्तु । अत्र कोऽर्चनीय इत्यपेक्षायामुच्यते पुरं न– पुरं प्रतिमां विष्णुत्वेन न पूजयत । किन्तु तत्रस्थं धर्षणशीलं तेजः परमात्माख्यं अर्चत इति ।

**द्विरुच्चार्यैवमावाह्य तमावाहनमुद्रया ।**
**ततस्तु प्रार्थनामुद्रां विधाय प्रार्थयेद्धरिम् ।।**

किमिति प्रार्थयेदित्यत आह – यागेति ।

**यागावसानपर्यन्तमत्र स्थित्वा जनार्दन ।**
**भक्तस्य मम पूजा त्वं गृहीत्वा पाहि मा विभो ।।**

**सम्प्रार्थ्यैवं स्वबिम्बाख्यं ...**

प्रार्थनादिमुद्रालक्षणं तु प्रसृताङ्गुलिकौ हस्तौ मिथश्लिष्टावसन्मुखौ । कुर्यात् स्वहृदये सेयं मुद्रा प्रार्थनसंज्ञिका' इति वचनात् ज्ञेयम् । ततः

**...मुद्रा आवाहनादिकाः ।**
**षण्मूलमन्त्रपूर्वं तु तं तमर्थमुदीरयेत् ।।**

**आवाहनं स्थापनं च सान्निध्यं सन्निरोधनम् ।**
**संमुखीकरणं चैव ह्यवगुण्ठनमेव च ।**

**प्रदर्श्यैताश्च षण्मुद्राः ...**

मुद्राः प्रदर्श्येत्युपलक्षणम् । 'सुप्रसन्नो भव' इत्युक्त्वा प्रसादमुद्रां च प्रदर्शयेत् । तल्लक्षणं तु

उत्तानौ तु करौ कृत्वा प्रसार्य हृदयस्थितौ ।
प्रसादमुद्रा विज्ञेया सर्वकार्यप्रसाधनी ।। इत्युक्तरीत्या ज्ञेयम् ।

मुद्राषट्कलक्षणानि तु

'हस्ताभ्यामञ्जलिं कृत्वाऽनामिकामूलपर्वणोः ।
अङ्गुष्ठौ निक्षिपेत्सेयं मुद्रा त्वावाहनी मता ।।१।।

अधोमुखी त्वियं चेत्स्यात्स्थापनीमुद्रिका मता ।
उच्छ्रिताङ्गुष्ठमुष्ट्योश्च संयोगात्सन्निधापनी ।।२।।

अन्तःप्रवेशिताङ्गुष्ठां सैव संरोधिनो मता ।
मुष्टिद्वयस्थिताङ्गुष्ठौ सम्मुखौ च परस्परम् ।।३।।

संश्लिष्टावुच्छ्रितौ कुर्यात्सेयं सम्मखुमुद्रिका ।
हस्तौ तु सम्मुखौ कृत्वा मुष्टी कृत्वा विकुण्ठयेत् ।।४।।

तयोरुपरि चाङ्गुष्ठौ निक्षिपेद्विवृतौ तथा ।
अवगुण्ठनमुद्रेयं सर्वकामफलप्रदा ।।५।।

इति वचनानुसारेण ज्ञेयानि । तदनन्तरं चक्राद्यायुधेभ्यो नमः आभरणेभ्यो नमः इति च आभरणानि विसर्जयित्वा ।

**...स्नानार्थं प्रार्थयत्ततः ।।**

यद्यात्मार्थं प्रपूजयेत्तदा विम्बमूर्तेरावाहनमस्तु । यदा च यजमानेन प्रार्थितः सन् तदर्थं देवपूजां करोति . तदा कस्यावाहनं इत्यत आह –

**परार्थं यदि पूजा स्यात्सूर्याग्न्यन्तर्गतं हरिम् ।**
**आवाह्य पूर्ववत्कार्यं सर्वमावाहनादिकम् ।।**

सूर्यान्तर्गतं हरिं 'ध्येयस्सदा' इति मन्त्रेण आवाह्य ध्यात्वा तमावाह्य स्वाञ्जलिं प्रत्याहूय सर्वमावाहनादिकं आवाहनमारभ्य स्नानार्थं प्रार्थनापर्यन्तं कर्म पूर्ववत् विम्वमूर्तेरिव कार्यम् । अथवा अग्न्यन्तर्गतं श्रीपरशुरामं 'अङ्गारवर्ण' इति मन्त्रेण स्वाञ्जलिं प्रत्याहूय आवाहनादिकं कार्यमित्यर्थः । किमिति स्नानार्थं प्रार्थनमित्यत आह –

**एहि श्रीभगवन् विष्णो स्नानार्थं मज्जनालयम् ॥**

**सम्प्रार्थ्यैवमिदं विष्णुरिति ऋचा पादुकार्पणम् ।**
**स्नानालयं समायान्तं ध्यात्वा नारायणं प्रभुम् ॥**

पादुकयोरर्पणं कृत्वा इति शेषः ।

**स्थापयेत्स्नानपीठे तं भद्रं कर्णेभिरित्यृचा ।**
**पुनस्तत्रापि षण्मुद्राः कुर्यादावाहनादिकाः ॥**

स्थापयेत् – उपवेशयेत् । ततो मूलमन्त्रेण मृत्तिकाशौचं गण्डूषान् दन्तकाष्ठं मुखप्रक्षालनं चोद्दिश्य पृथक्पृथक्पात्रे उदकं दत्वा वायुकरेण पादुकाचामरछत्र-दर्पणानि आसनार्थं पीठं दापयितुं, लक्ष्मीहस्तेन केशसंस्कारमङ्गमर्दनं सुगन्धितैलेन कस्तूर्यादिकल्केन चाभ्यङ्गं सुवर्णपात्रेणोष्णोदकस्नानं च कारयितुं प्रत्येकं तुलसीदलानि समर्पयेत् । यथोक्तं –

स्नानार्थमाहरेदेवं पादुके चाथ दर्पणम् ।
छत्रं च चामरं पीठं केशसंस्करणं तथा ॥

अङ्गमर्दनमभ्यङ्गं तैलेन च सुगन्धिना ।
कस्तूर्यादिमकल्केन स्नानमुष्णेन वारिणा ॥ इति ।

अस्मिन्वचने पादुकादिपीठान्तानां वायुदत्तत्वस्य केशसंस्करणा-द्युष्णोदकस्नानान्तानां लक्ष्मीदत्तत्वस्य चानुक्तावपि एतद्वचनार्थोपन्याससमयेऽपि विशेषप्रमाणदर्शिभिः सदाचारदर्पणकारैरेवमेवोपन्यस्तत्वात् तदनुसारेणास्मिन्

वचने 'पादुके' च इत्यतः पूर्वं वायुहस्तेनेति शेषः, केशसंस्करणमित्यतः पूर्वं लक्ष्मीहस्तेनेति शेषश्च अभिमतावित्यवगमात्र दोष इति भावः ।

**ततोऽर्घ्यं मूलमन्त्रेण पाद्यमाचमनीयकम् ।**
**मधुपर्कं ततो दद्यात् स्नानमाचमनं पुनः (पुनराचमनं ततः)**

अत्र मधुपर्कानन्तरं पुनराचमनस्यैव देयत्वात् आचमनं स्नानमिति वक्तव्ये स्नानस्यादौ ग्रहणं 'अल्पाच्तरं पूर्वं' इति वचनानुसारेणेति ज्ञेयम् । तथा चादौ पुनराचनं अनन्तरं स्नानमिति योजना । इदं च पुनराचमनानन्तरं दीयमानं स्नानं मलापकर्षणस्नानमेवेति आह्निकतरङ्गकाराणां मतम् । अर्घ्याद्युपचारपञ्चकार्पणानन्तरमेव मलापकर्षणस्नानं कारियत्वेति तैरुक्तत्वात् । युक्तं चैवं प्रतिपादनम् । प्राक् 'अर्घ्यं वायुपदे प्रोक्तं'इत्यादिना पात्रषट्कासादमनभिधाय तदनुरोधेन 'अर्घ्यं श्रिया समायुक्तं' इत्यादिना देवतापट्कं चाभिधाय अर्घ्याद्युपचारपञ्चकमात्रस्यैव समर्पणप्रतिपादने षष्ठोपचारप्रतिपादनालाभेन न्यूनतापातात् । सदाचारदर्पणकाराणां मते तु अर्घ्याद्युपचारपञ्चकार्पणानन्तरं पञ्चामृताभिषेकः, तदनन्तरं उद्वर्तनम्, तदनन्तरं मलापकर्षणस्नानमिति क्रमः । अयमपि युक्ततर एव । पञ्चामृतोद्वर्तनद्रव्यसम्बन्धापकर्षणस्य विहितत्वात् । एवं च युक्तयुक्ततरमतद्वयप्रामाण्यान्यथानुपपत्त्या मलापकर्णस्नानं द्विवारं देयमिति प्रतिभाति । न च द्वितीयमतानुसारेण मलापकर्षणस्नामित्यतः पूर्वं पञ्चामृतोद्वर्तनं विधायेति शेषपूरणं कार्यम् । अन्यथा प्राक् पञ्चामृतदेवतापूजां 'दुग्धे तु देवो गोविन्दः' इत्यादिना निरूप्य पञ्चामृताभिषेकस्याप्रतिपादने न्यूनतापातादिति वाच्यम् । न्यूनतापरिहारस्य एतादृशशेषपूरणस्य मलापकर्णस्नानं कारयित्वेत्येतदनन्तरमपि कर्तुं शक्यत्वेन ततः प्रागेव तत्कर्तव्यत्वे साधकाभावात् । न चानन्तरमेव शेषपूरणपक्षे पञ्चामृताभिषेकोद्वर्तनमलापकर्षणस्नानानि कारयित्वेत्येतावतो वाक्यशेषस्य पूरणं कार्यमिति गौरवम् । प्राक्शेषपूरणपक्षे तु पञ्चामृतोद्वर्तनं

कारयित्वेत्येतावत एव शेषस्य पूरणमिति लाघवम् । एवं च लाघवे सति पश्चामृताभिषेकाद्यनन्तरमेव मलापकर्षणस्नानस्य सकृदेव कर्तव्यत्वलाभेन न द्विवारं कार्यम् । सति चैवं द्वितीयमतमप्यनुसृतं भवतीति वाच्यम् । प्राक् यावतो वाक्यशेषस्य पूरणम् । अनन्तरमपि तावत एव पूरणस्य कर्तव्यत्वाङ्गीकारेण लाघवसाम्यात् । मलापकर्षणस्नानं कारयित्वेत्यस्य चानुवृत्तिमात्राङ्गीकारेणाभिमतार्थलाभसम्भवेन तदर्थशेषपूरणानङ्गीकारात् । न च पश्चामृतात्पूर्वं मलस्यैवाप्रसक्ततया तदपकर्षणं न सम्भवतीति वाच्यम् । उष्णोदकस्नानेन प्राक् सुगन्धतैलकस्तूर्यादिकल्कस्य निश्शेषस्यानपगततया तदर्थमिदमाद्यं मलापकर्षणस्नानं वरुणहस्तेन दापनीयमित्यङ्गीकारात् । अत्र आह्निकतरङ्गे 'वरुणहस्तेन इति कर्तृविशेषो नोक्तः । विशेषोक्त-वद्वचनान्तरबलात्सुज्ञेय इति ज्ञेयम् ।

अर्घ्यादिषु अत्र मूलमन्त्रेणेत्युपलक्षणम् । सदाचारदर्पणोक्तरीत्या अर्घ्यादीनां क्रमेण १)'आपो हिष्ठा' (ऋ.सं.१०–९–१)इति २) 'अस्मिन्राष्ट्रे ()इति ३) 'शन्नो देवीरभीष्टये'(ऋ.सं.१०–९–४) ४) 'मधुवाता'(१–९०–६) ५) 'शन्नो देवीरभीष्टये' इति, ऋक्पश्चकमपि ग्राह्यम् । तथा च 'आपो हि ष्ठा इति मन्त्रेण लक्ष्मीहस्तेन इदं ते अर्घ्यमिति अर्घ्यं , 'अस्मिन् राष्ट्रे' इति मन्त्रेण सरस्वती हस्तेन इदं ते पाद्यमिति पाद्यं, 'शन्नो देवीरभीष्टये' इति मन्त्रेण रतिहस्तेन इदं ते आचमनमिति आचमनम्, 'मधुवाता' इति मन्त्रेण पितामहहस्तेन अयं ते मधुपर्क इति मधुपर्कं, शन्नो देवीरभीष्टये इति मन्त्रेण शान्तिहस्तेन इदं ते पुनराचमनमिति पुनराचमनं च दद्यात् इति मन्त्रान्तराण्युक्तानि । आह्निकतरङ्गे तु मूलमन्त्रेणेत्यस्य उपलक्षणत्वमभिप्रेत्यैव सदाचारदर्पणोक्तार्घ्यादिमन्त्राण्यवाङ्गीकृत्य पाद्यमधुपर्कयोः 'आपः पादा' () इति मन्त्रगायत्रीमन्त्रयोरेव मन्त्रान्तरत्वमुक्तम् । अत्र सर्वत्र दधिमधूनि मधुपर्कशब्दार्थः । तदलाभ एवोदकदानमिति ज्ञेयम् । ततो वरुणहस्तेन मूलमन्त्रेण मलापकर्षणस्नानं कारयित्वा पश्चामृताभिषेकं कुर्यात् ।

**आप्यायस्व दधिक्राव्णो घृतं मिमिक्षे इत्यृचः ।**
**मधुवाता तथा स्वादुरिति मन्त्रान्समूलकान् ।।**

**क्रमेणैतान् पठन् पञ्चामृतेन स्नापयेद्धरिम् ।**
**पयो दधि घृतं क्षौद्रं शर्करा पञ्चमामृतम् ।।**

*आप्यायस्वेत्यस्य गौतमः सोमः ऋषिः गायत्री छन्दः पयस्स्नपने विनियोगः ।*

आ प्यायस्व समेतु ते विश्वतस्सोम वृष्ण्यम् ।
भवा वाजस्य सङ्गथे (ऋ.सं.१–९१–१६)

इति ऋचा पयसा सस्नाप्य वस्त्रादिनीराजनान्तोपचारान् कृत्वा देवं पात्रान्तरे संस्थाप्य,

*दधिक्राव्ण इत्यस्य वामदेवः दधिक्रावा अनुष्टुप् दधिस्नपने विनियोगः ।*

दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत् प्र ण आयूंषि तारिषत् । (ऋ.सं.४–३९–६)

इति मन्त्रेण दध्ना स्नापयित्वा वस्त्रादिनीराजनान्तोपचारान् दत्त्वा *'घृतं मिमिक्षे' इत्यस्य गृत्समद, त्रयस्त्रिष्टुप् घृतस्नपने विनियोगः ।*

घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम ।
अनुष्वधमा वह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ।
(ऋ.सं.२–३–११)

इति ऋचा घृतेन संस्नाप्य वस्त्रादिनीराजनान्तोपचारान् कृत्वा *'मधु वाता' इत्यस्य गौतमो विश्वेदेवा गायत्री मधुस्नपने विनियोगः ।*

'मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः । मधु द्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः । ऋ.सं.१–९०–६,७,८)

इति ऋचा स्नापयित्वा पूर्ववदुपचारान्समर्प्य *'स्वादुः पवस्व' इत्यस्य वेनो भार्गवो विश्वेदेवाः, जगती, शर्करया स्नपने विनियोगः ।*

'स्वादुः पवस्व दिव्याय जन्मने स्वादुरिन्द्राय सुहवीतुनाम्ने ।
स्वादुर्मित्राय वरुणाय वायवे बृहस्पतये मधुमाँ अदाभ्यः ।।'

इति ऋचा शर्करया स्नापयित्वा वस्त्रादिनीराजनान्तोपचारान्समर्पयेत् । एवं पञ्चामृताभिषेकं समाप्य उद्वर्तनद्रव्यैरुद्वर्तनं कुर्यात् । तदुक्तं नृसिंहपुराणे–

शालिपिष्टं च गन्धश्च पालाशस्य भस्मकम् ।
शिलाचूर्णं ततः प्रोक्तमथोद्वर्चनमाचरेत्'

तथा

'यवगोधूमयोश्चूर्णैरुद्वर्त्योष्णेन वारिणा ।
प्रक्षाल्य देवदेवेशं वारुणं लोकमाप्नुयात् ।।

पञ्चगव्यदधिक्षीरघृतमध्वादिपूर्वकैः ।
फलैः फलानां सारैश्च तिलसर्षपसक्तुभिः ।।

घर्षयेद्बिल्वपत्राद्यैर्लेपगन्धापनुत्तये ।
पुनस्संस्नाप्य सलिलैश्चक्रवर्त्युपचारतः ।।

सुगन्धामलकं दद्याद्हरिद्रश्च यथाक्रमम्'

एवमुद्वर्तनं कृत्वा पीठेन सह देवमुदकैः संशोध्य गन्धाद्यर्घ क्रमकलशातिरिक्तकलशस्थोदकेन स्वादूदकेन कुशपुष्पाक्षतहिरण्यरत्नोदकैश्च अभिषेकं कुर्यात् । तदुक्तं 'ततस्संशोध्य सलिलैर्देवं पीठयुतं ततः । स्नापयेद्गन्धतोयेन कुशपुष्पाक्षतेन च । हिरण्यरत्नतोयैश्च मन्त्रसिद्धैर्यथाक्रमम् । इति । अत्र पञ्चामृतस्नानापेक्षया गन्धोदकस्नानमत्यावश्यकम् ।

'दशापराधं तोयेन क्षीरेण क्षमते शतम् ।
सहस्रं क्षमते दध्ना अक्षतेन क्षमते युतम् ।।

मधुना क्षमते लक्षमिक्षुणा दशलक्षकम् ।
नारिकेलाम्बुना कोटिमनन्तं गन्धवारिणा ।।

इति गन्धोदकस्नानेन अनन्तापराधसहनोक्तेरिति ध्येयम् ।

**ततः शुद्धोदकस्नानं कारयेत् परमात्मनः ।**
**पौरुषं वैष्णवं घार्मं पवस्वेति त्रिवर्गकम् ।।**

**य इन्दोरेकवर्गश्च समुद्रादूर्मिरेव च ।**
**जितन्त इति स्तोत्रं च पठन् संस्नापयेद्धरिम् ।।**

पुरुषसूक्तविष्णुसूक्तघर्मसूक्तैः सम्पूर्णपवमानपारायणायोगे 'पवस्व' इति वर्गत्रयात्मकपवमानेन, 'य इन्दोः' इति सप्तमाष्टकस्थनारायणसूक्तगतेनैकेन वर्गेण 'समुद्रादूर्मिः इति सूक्तेन 'जितं ते' इति स्तोत्रेण चाभिषेकं कुर्यात् । एकादशस्कन्धभागवते

'स्वस्य घर्मानुवाकेन महापुरुषविद्यया ।
पौरुषेणात्मसूक्तेन धामनिराजनादिभिः ।।'

इति उद्धवं प्रति श्रीकृष्णवाक्यम् । तत्र स्वस्य सूक्तेन विष्णुसूक्तेनेत्यर्थः । घर्मानुवाकेन 'घर्मासमन्तात्' (१०–११४–१)इति ऋग्वेदोक्तेन 'सुवर्णं कोशं रजसा परिवृतं देवानां' इति तैत्तरीयगतेन च, महापुरुषविद्यया जितं ते स्तोत्रेण पौरुषेण सूक्तेन, धामपदेन 'धामं ते विश्वं' (ऋ.सं.४–५८–१)इति मन्त्रोपलक्षितसमुद्रादूर्मिरिति सूक्तं गृह्यते । तेन नीराजनपदेन नीराजनं पवमानसूक्तं गृह्यते ।

'नितरां रञ्जयेयस्मात्पावमानं तु मण्डलम् ।
विष्णोर्नीराजनं तस्माद्विद्वद्भिस्समुदाहृम् ।।'

इति भागवततात्पर्यात् नीराजनशब्दस्य उक्त एवार्थः । आदिपदेन 'य इन्दोः' इति वर्गपरिग्रहः । तथा भागवतानुसारेण पद्यमालायाः प्रवृत्तिरिति

ज्ञेयम् । यत्तु आह्निकतरङ्गे आत्वाहर्षसूक्तघर्मसूक्तविष्णुसूक्तविश्वकर्मसूक्त-पुरुषसूक्ताख्य पञ्चसूक्तप्रदर्शनं तत्

'आ त्वा हर्षं घर्मसूक्तं वैष्णवं विश्वकर्मणः ।
सूक्तं पौरुषमित्येवं पञ्चसूक्तान्युदीरयेत् ।।

इति वचनमनुसृत्येति ज्ञेयम् । एवमणुवेदान्तनारायणवर्मब्रह्मसूत्राष्ट-महामन्त्रैरपि वृहत्कलशस्थोदकमुद्धरण्या उद्धृत्य शङ्खे निक्षिप्य तेनैव अभिषेकं कुर्यात् । तदनन्तरं पूर्णकुम्भमुद्धृत्य तेनैव अजाय नमः इत्येकोत्तरशत-मन्त्रैरभिषेकं कुर्यात् । 'शिंशुमारदिकान्पूर्णे आह्वयेत्कलशे सुधीः । अजादिमूर्तिभिः प्राज्ञो ह्यभिषेकं समाचरेत् । इत्युक्तेः । स्नानकाले घण्टानादः कार्यः ।

स्नानकाले विशेषेण घण्टानादं करोति यः ।
पुरतो वासुदेवस्य तस्य पुण्यमनन्तकम् ।।

इति स्कान्दवचनात् । अत्र प्रतिमायां निरन्तरमभिषेको न कार्यः । 'प्रतिमापट्टवस्त्राणां नित्यस्नानं न कारयेत् । कारयेत्पर्वदिवसे यथामलविकर्षणम् । इति व्यासवचनादित्यर्थः ।

**ततोऽङ्गमार्जनं वस्त्रं पीतं च परिधानकम् ।**

ओं नमो नारायणाय इति मन्त्रेण अङ्गाङ्गमार्जनं वस्त्रेण देवं सम्मार्ज्य नीराजनं कृत्वा 'अभिवस्त्रा' (ऋ.सं.९–९७–५०)इति मन्त्रेण सम्पुष्टे वस्त्रं प्रसार्य तत्र सालिग्रामचक्राङ्कितानि निधाय देवमलङ्कारपीठं प्रति आगच्छेति विज्ञाप्य पादुके दत्वा चामरादिविभवपुरस्सरं तं प्रत्यायन्तं भावयित्वा स्नानाङ्गपाद्याचमने दत्वा 'युवां वस्त्राणि' इति वस्त्रद्वयं समर्प्य केशान्संशोध्य

ततः सर्वाङ्गभूषाश्च नूपुराद्या किरीटकम् ।
ध्यात्वैव भूषणं किञ्चिन्नवमप्यर्पयेत्सुधीः ।।

किरीटं नूपुराद्याभरणानि च नूतनमपि किञ्चिद्भूषणं समर्पयेत् ।

अत्र पूर्वस्मिन् दिवसे समर्पितानामाभरणादीनां परस्मिन्दिवसे प्रक्षाल्य समर्पणे कृते सत्यपि न निर्माल्यत्वदोषः ।

यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठन्ति देवताः ।
न निर्माल्यं भवेत्तावत्स्वर्णवस्त्रविभूषणम् ।।

इति वचनात् । अनन्तरं

अनेकरत्नसंयुक्ता तुलसीदलमिश्रिता ।
विष्णुवक्षस्स्थले माला वैजयन्तीत्युदाहृता ।।

इति मन्त्रेण लक्ष्म्यभिमन्यमानां च वैजयन्तीमालां समर्प्य

देदीप्यमानचन्द्रार्ककोटिकान्तिसमप्रभः ।
विष्णोर्वक्षस्स्थले भास्वत्कौस्तुभस्समुदाहृतः ।।

इति मन्त्रेण ब्रह्माभिमन्यमानं कौस्तुभं समर्प्य मूलमन्त्रेण श्रीवत्सं तेनैव चूडामणिं च दत्वा यज्ञोवपीतं च दत्वा आसने चोपवेशयेत् । 'यज्ञोपवीतं' इति मन्त्रेण यज्ञोपवीतद्वयं समर्प्य मध्ये आचमनं कारयित्वा दर्पणं पादुके च दत्वा भोः स्वामिन् भोगसिंहासनमागच्छ इति प्रार्थयित्वा प्राग्दत्तमेवासनं प्रक्षाल्य दत्त्वा तस्मिन्नासने उपवेशयेत् । अत्र सर्वत्र यथोक्तद्रव्यालाभे तुलसीदलैरेव तत्तदाभरणानुसन्धानपूर्वकं सर्वानुपचारान्समर्पयेदिति ज्ञेयम् ।

अभिषेकात् पुरा वापि पश्चाद्वा परमात्मनि ।
तत्त्वन्यासादि ध्यानांतं कृत्वा पूजां समारभेत्(समाचरेत्) ।

मूलद्वादशकं जप्त्वा आसनस्थं हरिं स्पृशन् ।
(आसनस्थं हरिं स्पृष्ट्वा मूलद्वादशकं जपेत् ।)

अत्रादौ मातृकान्यासः अनन्तरं तत्त्वन्यासः इति क्रमो ज्ञेयः ।

'वैष्णवेषु च मन्त्रेषु तत्वानां न्यसनं पुरा ।
ततस्तु मातृकान्यासं कुर्यादन्यत्र चान्यथा ।।'

इति विशेषवचनात् । अन्यत्र देवपूजादौ प्रतिमायां अन्यथा आदौ मातृकान्यासं कृत्वा अनन्तरं तत्त्वन्यासः कर्तव्य इत्याशयः ।

तदनन्तरं नारायणष्टाक्षरमन्त्रस्य जपस्य 'ओं कृद्धोल्काय हृदयाय नमः' इत्यादिमन्त्रैः पञ्चाङ्गन्यासः । ओं विश्वाय नमः इत्याद्यष्टाक्षरन्यासश्चेति द्वावेव कारयेत् । न त्वस्मदादीनां जपार्थमिव कृद्धोल्कादिमन्त्रैः द्विरावृत्तैः अङ्गुलिषु न्यासम् । ओं विश्वाय नमः इत्यादिमन्त्राष्टके ज्येष्ठाङ्गुलिमात्रमपहाय दक्षिणतर्जनीमारभ्य अष्टाङ्गुलिषु न्यासं 'करन्यासादृते देवं पञ्चन्यासं समाचरेत्' इति परमपुरुषसंहितायां विशेषोक्तेः । पञ्चन्यासं पञ्चाङ्गन्यासं इत्यर्थः । 'करन्यासं विना देवे न्यासकर्म समाचरेत्' इति परमपुरुषसंहितायां 'मूलमन्त्रं तदङ्गानि देवगात्रेषु विन्यसेत्' इति पञ्चाङ्गन्यासस्येव अष्टाक्षरन्यासस्यापि कर्तव्यत्वोक्तेश्च । तन्त्रसारे–

मूलमन्त्रस्य चाङ्गानां न्यासस्स्नानादनन्तरम् ।
प्रतिमायां सन्निधिकृच्छिष्ये माहात्म्यकृद्भवेत् ।।

इति तयोरेव प्रतिमायां सन्निधानसम्पादकत्वोक्तेरित्यवगन्तव्यम् । तदनन्तरं 'उद्यद्भास्वत्....' इति ध्यात्वा आसनस्थं हरिं ध्यात्वा मूलद्वादशकं जपेत् । अत्र मातृकातत्त्वन्यासाष्टाक्षरजपानां उपास्यप्रतिमायामेकत्रकरणेन ऐक्यानुसन्धानेन प्रतिमान्तरेष्वपि कृतप्रायत्वान्न तदर्थं पृथगायास इति प्रागेवोक्तम् । परं तु यद्यद्देवताधिष्ठिताः प्रतिमाः सन्ति, तत्तद्देवतामन्त्रान् मूलमन्त्रं वा तत्तत्प्रतिमाः स्पृष्ट्वा द्वादशवारं जपेदिति सम्प्रदायोऽवगन्तव्यः । तदनन्तरम् ।

अर्पयेद्गन्धपुष्पाणि मूलेन तुलसीं तथा ।

अत्र 'अगुरुस्तुलसीकाष्ठं कदम्बं देवदारुकम् । विल्वागस्तौ चन्दनं च कुङ्कुमं चेति चाष्टमम् ।' इति वचनोक्तानि गन्धाष्टकानि सम्पाद्य तैर्घनीभूतं गन्धं कृत्वा शङ्खे निधायैव तुलसीमिश्रितमेव दद्यात् । तदुक्तं वाराहे –

घनीभूतं चन्दनं च कस्तूरीकुङ्कुमादिकम् ।
तुलसीमिश्रितं सर्वं विष्णवे तु समर्पयेत् ।।

विलेपयन्ति देवेशं कृत्वा शङ्खे तु चन्दनम् ।
परमात्मा परां प्रीतिं करोति शतवार्षिकीम् ।।

इति । न च घनीभूतस्यैव गन्धस्य समर्पणयीत्वे मध्वविजये 'विमलमलयजाम्भोविन्दुभिश्चार्चितार्चः' (१४–३५)इति वचनविरोधः स्यादिति वाच्यम् । तस्य आर्द्रगन्ध एव समर्पणीयः न तु शुष्कगन्ध इत्यत्रैव तात्पर्यम् । न तु द्रवीभूतगन्धसमर्पणीयत्वे । तथा सति उक्तवाराहवचनविरोधप्रङ्गात् । अत एव तट्टिप्पण्याम् 'आर्द्रगन्धैरिति भावः । घनीभूतगन्धैरेव पूजाया विहितत्वात्'इति व्याख्यातमित्यवधेयम् । प्रमाणे गन्धशब्देन लक्षणया अक्षतस्यापि ग्रहणमित्यवधेयम् । गन्धदानमन्त्रस्तु –

श्रीखण्डं चन्दनं दिव्यनानागन्धमनोहरम् ।
विलेपनं सुरश्रेष्ठ प्रीत्यर्थं प्रतिगृह्यताम् इत्येकः ।।

'गन्धद्वारां' इत्यपरो मन्त्रः । अत्र पूर्वपूर्वगन्धं हस्ते गृहीत्वा सालिग्रादिकान् स्पृष्ट्वा समर्पणं कार्यम् । अनन्तरं हस्तं प्रक्षाल्यैवोत्तरोत्तरगन्धग्रहणं कार्यम् । अन्यथा उत्तरोत्तरगन्धानां निर्माल्यापातात् । एवं मालाधूपदीपमाला नीराजनसमर्पणेष्वपि मध्ये हस्तप्रक्षालनमिति ज्ञेयम् ।

एवं गन्धं समर्प्य दुर्गाभिमन्यमानमङ्गारं लक्ष्म्यभिमन्यमानामक्षतां च समर्प्य

'माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ।
मयाहृतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम् ।।

इति मन्त्रेण प्रातस्स्नानात्पूर्वमेवानीतानि अस्नातेन शिष्यादिना वा आनीतानि पुष्पाणि समर्पयेत् ।

स्नानं कृत्वा तु ये केचित्पुष्पं गृह्णन्ति वै द्विजाः ।
देवतास्तन्न गृह्णन्ति भस्मीभवति काष्ठवत् ।।

इति हारीतेन स्नात्वा पुष्पचयननिषेधकरणात् ।

येषां न सन्ति पुष्पाणि प्रशस्यान्यर्चनं हरेः ।
पल्लवान्यपि तेषां स्युश्शस्तान्यर्चाविधौ हरेः ।।

इति वचनात् । पुष्पाभावे तत्पल्लवैर्वा पूजा कार्या । एवं दूर्वाङ्कुराणामपि समर्पणं कार्यम् ।

भक्त्या दूर्वाङ्कुरैः पुम्भिः पूजितः पुरुषोत्तमः ।
हरिर्ददाति हि फलं सर्वयज्ञैश्च दुर्लभम् ।।

(१४)इति कृष्णामृतमहार्णवोक्तेः । 'न हीन्दिराराध्यपदो मुकुन्दो दुर्वाङ्कुरैर्मन्दधनैरपूज्यः' (त.प्र.४–४–२३)इति श्रीटीकाकृत्पादैरुक्तत्वाच्च । पत्राण्यपि कानिचित्समर्पणीयान्येव ।

बिल्वपत्रं शमीपत्रं पत्रं भृङ्गारकस्य च ।
मालती कुशपत्रं च सद्यस्तुष्टिकरं हरेः ।। इति वचनात् ।

'सकृदभ्यर्च्य गोविन्दं बिल्वपत्रेण मानवः ।
मुक्तिभागी निरातङ्को विष्णुलोके महीयते ।।' इति वचनाच्च ।

तुलसीदलानि स्नात्वैवानीतानि समर्पणीयानि । 'अस्नात्वा तुलसीं छित्त्वा येऽर्चयन्ति जनार्दनम् । अशुद्धा सम्भवेत्पूजा पञ्चगव्येन शुद्ध्यति ।' तुलसीसम्पादनं विना सर्वथा पूजा न कार्या । तदभावे तत्पल्लवादिभिः पूजा कार्येत्युक्तं पुराणेषु –

'तुलसीमञ्जरी ग्राह्या तदभावे तु पल्लवः ।
तदभावे तु पत्रं स्यात्तदभावे तु काष्ठिका ।।

तदभावे तु मूल स्यात्तदभावे तु मृत्तिका ।
मृत्तिकाया अभावे तु तुलसीशब्द उच्यते ।।

तुलसीपक्कपत्रैश्च श्रीहरेः पादपङ्कजे ।
पूजनं ये तु कुर्वन्ति ते कृतार्थाः कलौ नराः ।।

शुष्कं पर्युषितं वापि न निर्माल्यं त्रिवासरैः ।
प्रक्षालयित्वा तुलसीं पूजयेच्च सदा हरिम् ।।

निर्माल्यमपि वै ग्राह्यं तुलसीहेमपुष्पकम् ।
शुद्धोदकेन सम्प्रोक्ष्य विष्णवे च समर्पयेत् ।।

विष्णुधर्मोत्तरे च

न तन्निर्माल्यतां याति यच्च विष्णौ समर्पितम् ।
पुनः प्रक्षाल्य विधिवद्योजितान्यपि योजयेत् ।।

विनापि तुलसीं विष्णुं पूजयेत्पुरुषोत्तमम् ।
तेन मद्हृदि शल्यं स्यात्स्वर्पितं भवति ध्रुवम् ।।

मणिकाञ्चनपुष्पाणि तथा मुक्तामयानि च ।
तुलसीपत्रदानस्य कलां नार्हन्ति षोडशीम् ।। इति ।

अत्र एकैकं पुष्पं तुलसीदलं वा आदाय समर्पणं कार्यम् ।

'प्रत्येकं पुष्पमादाय तुलसीं वा समर्पयेत् ।
प्रत्येकं मूलमन्त्रैर्वा युगपन्नार्पयेन्मम ।।

यावन्ति युगपद्दद्यात्तावदेकमितीरितम् ।।' इति वाराहोक्तेः ।

तथा चैकैकं पुष्पं तुलसीदलं वा गृहीत्वा केशवादिचतुर्विंशतिनामभिः मत्स्यादिदशनामभिः नारायणाद्यष्टोत्तरनामभिः विश्वादिसहस्रनामभिश्च

यथासम्भवमर्पणं कुर्यात् । देवाय मालासमर्पणेन अन्नलाभो भवतीति परमरहस्यम् । अत एवान्नप्राप्तिकामुकेन श्वेतराजेन ब्रह्मवचनात् अगस्त्यमुखाद्दापितां मालां परिगृह्य श्रीरामः तस्यान्नप्राप्तिं कृतवानिति कथा (९.२२–२५) श्रीमद्भारततात्पर्यनिर्णये व्यक्ता । मालासमर्पणकाले मन्त्ररूपोऽयं मामकः श्लोकः ।

'कीलालोद्भवयोनिना समुदितो हालाहलाभाखिल
स्वीलाभाद्युपचारवान्नृपवरोऽन्नालाभतः कश्चन ।
मालादानवरान्नवान्भुवि धरापालात्मजश्चाभवन्
मालामित्यमहं धियैव सुमनश्शालाय तेऽर्पये ।।

इति । अत्र 'अर्घ्यं पाद्यं' इति प्रमाणे पुष्पपदेनैव तुलस्यादीनामजह-ल्लक्षणया ग्रहणलाभात् तेषां पृथगर्पणीयत्वेऽपि न षोडशत्वसंख्याभङ्ग इत्यवधेयम् ।

**आयुधावरणपूजा**

**ततश्चक्रायुधादीनि पूजयेत्क्रमशो दश ।**
**दुर्गा चक्राधिदेवी स्यात् श्रीश्च शङ्खाधिदेवता ।।**

**वायुर्गदाधिदेवः स्याद्भूमिः पद्माभिमानिनी ।**
**दुर्गैव खड्गदेवी स्याच्छार्ङ्गे चैव सरस्वती ।।**

**पञ्चप्राणाः पञ्चबाणा विरिञ्चिः कौस्तुभात्मकः ।**
**श्रीरेव वनमालायां लक्ष्मीः श्रीवत्सदेवता (संस्थिता) ।।**

ओं चक्राधिदेव्यै दुर्गायै नमः । ओं शङ्खाधिदेवतायै श्रियै नमः । ओं गदाधिदेवाय वायवे नमः । ओं पद्माभिमानिन्यै भूम्यै नमः । ओं खड्गाभिमानिन्यै दुर्गायै नमः । ओं शार्ङ्गाभिमानिन्यै सरस्वत्यै नमः । ओं पञ्चबाणाधिदेवताभ्यः पञ्चप्राणेभ्यो नमः । ओं कौस्तुभाभिमानिने विरिञ्चाय नमः । ओं वनमालाधिदेवतायै श्रियै नमः । ओं श्रीवत्साधिदेवतायै लक्ष्म्यै

नमः । श्रीवत्सकौस्तुभयोः पूर्वं समर्पणमुक्तम् । इदानीं तु तयोः पूजेति भेदः । देवस्य दक्षिणोर्ध्वबाहुमारभ्य प्रादक्षिण्येन पूजयेत् ।

आवरणपूजा

अथावरणपूजायां लक्ष्मीं वामे हरेर्यजेत् ।
धरां च दक्षिणे पार्श्वे ततः पूर्वादिदिक्षु च ॥

क्रुद्धोल्काय महोल्काय विरोल्काय नमस्ततः ।
यूल्काय च नमस्कुर्यादुदीच्यां दिशि च क्रमात् ॥

सहस्रोल्कायेति चतुराग्नेयादिविदिक्षु च ।
पुनः पूर्वादिकाष्ठासु वासुदेवादिकान्यजेत् ॥

मायां जयां कृतिं शान्तिं यजेत्कोणेषु च क्रमात् ।
केशवाद्यास्ततो मूर्तिर्द्वादश क्रमतो यजेत् ॥

दिशि द्वे द्वे कोण एक (दिशि द्वे कोणगा चैका)ऐशे दामोदरो भवेत् ।
सङ्कर्षणादिकृष्णान्ता मूर्तयो द्वादश क्रमात् ॥

मत्स्यादिमूर्तयोऽप्येवं (नन्तो) द्वादशान्तं क्रमाद्यजेत् ।
ई(ऐ)शान्यां विश्वरूपः स्यात्क्रमेणानेन पूजयेत् ॥

सर्वदिक्षु पुनश्चापि ह्यनन्तादीन् सभार्यकान् ।
इन्द्रादींश्च सपत्नीकान् परिग्रहयुतानपि ॥

पूजयेत्क्रमशो धीमान् स्वासु दिक्षु स्थितान् बहिः ।
पश्चात्पुरस्ताच्छेषं च विधिं चैव सभार्यकम् ॥

पूजयित्वा...

पश्चात् – पृष्ठभागे । निऋति –वरुणयोर्मध्ये इति यावत् । पुरस्तात् – पूर्वभागे इन्द्रेशानयोर्मध्यभागे इति यावत् । अथ आवरणपूजां करिष्ये इति सङ्कल्प्य आवरणदेवताभ्यः प्रत्येकं पुष्पं समर्पयेत् । अथवा तुलसीदलं गृहीत्वा अञ्जलिं कुर्यात् । मध्ये ओं श्रीलक्ष्मीनारायणाय नमः । देवस्य सव्ये लक्ष्म्यै नमः । दक्षे धरायै नमः । इति प्रथमावरणम् । तद्बहिः प्रागादिदिक्षु वासुदेवाय नमः सङ्कर्षणाय नमः प्रद्युम्नाय नमः अनिरुद्धाय नमः इति द्वितीयावरणम् । तद्बहिः कोणेषु मायायै नमः, जयायै नमः, कृत्यै नमः, शान्त्यै नमः, इति तृतीयावरणम् । तद्बहिः दिक्षु द्वयं, कोणेष्वेकेकं केशवाय नमः, नारायणाय नमः, माधवाय नमः, गोविन्दाय नमः, विष्णवे नमः, मधुसूदनाय नमः, त्रिविक्रमाय नमः, वामनाय नमः, श्रीधराय नमः, हृषीकेशाय नमः, पद्मनाभाय नमः, दामोदराय नमः इति चतुर्थावरणम् । तद्बहिः मत्स्याय नमः, कूर्माय नमः, वराहाय नमः, नारसिंहाय नमः, वामनाय नमः, भार्गवाय नमः, राघवाय नमः, कृष्णाय नमः, बुद्धाय नमः, कल्किने नमः, अनन्ताय नमः, विश्वरूपाय नमः इति पञ्चमावरणम् । तद्बहिः प्रागादिदिक्षु अनन्ताय नमः, ब्रह्मणे नमः, वायवे नमः, ईशानाय नमः, अग्रे गरुडाय नमः । कोणेषु वारुण्यै नमः, गायत्र्यै नमः, भारत्यै नमः, गिरिजायै नमः, गरुडवामे सौपर्ण्यै नमः इति षष्ठावरणम् । तद्बहिः प्रागादिदिक्षु इन्द्राय सुराधिपतये पीतवर्णाय वज्रहस्ताय ऐरावतवाहनाय शचीसहिताय विष्णुपार्षदाय नमः । यद्यपि ऐरावतेत्यादिविशेषणद्वयस्थाने 'सवाहनाय सभार्याय' इत्येव पदद्वयं मन्त्रघटकम् । तथैव मन्त्रोद्धारे तन्त्रसारटिप्पण्यां प्रदर्शितत्वात् । तथापि सवाहनसभार्यत्वयोः स्पष्टीकरणाय शिष्टानामेवमपि पाठसद्भावान्न दोषः । एवमग्रेपीति ज्ञातव्यम् । आग्नेय्यां अग्नये तेजोऽधिपतये रक्तवर्णाय शक्तिहस्ताय मेषवाहनाय स्वाहासहिताय विष्णुपार्षदाय नमः । दक्षिणे यमाय प्रेताधिपतये कृष्णवर्णाय दण्डहस्ताय महिषवाहनाय श्यामलासहिताय विष्णुपार्षदाय नमः । नैर्ऋत्यां रक्षोधिपतये धूम्रवर्णाय खड्गहस्ताय

मकरवाहनाय कालिकासहिताय श्रीविष्णुपार्षदाय नमः । पश्चिमे वरुणाय जलाधिपतये शुभ्रवर्णाय पाशहस्ताय मृगवाहनाय गङ्गासहिताय श्रीविष्णुपार्षदाय नमः । वायव्यां वायवे प्राणाधिपतये धूम्रवर्णाय अङ्कुशहस्ताय तुरगवाहनाय वायवीसहिताय श्रीविष्णुपार्षदाय नमः । अत्र एकस्यैव यकारस्य यममन्त्रवीजाक्षरत्वं, वायुमन्त्रवीजाक्षरत्वं, चौपपाद्य वचनवलात् । 'वायुं प्राणाधिपं धूम्रं' इति वचनात् प्राणाधिपतये इति पाठः । ओं सं सोमाय नक्षत्राधिपतये शुक्लवर्णाय गदाहस्ताय कुरङ्गवाहनाय रोहिणीसहिताय श्रीविष्णुपार्षदाय नमः । ईशान्यां ईशानाय विद्याधिपतये स्वच्छाय शूलहस्ताय वृषभवाहनाय पार्वतीसहिताय श्रीविष्णुपार्षदाय नमः । अत्र पृथ्व्यग्निपवनाद्यान्त्यवरुणानिलसेश्वरैः । अनन्तविन्दुसंयुक्तैरर्च्याः पाशेन मायया' इति प्रमाणे लोकपालमन्त्रवीजाक्षरप्रदर्शके 'ईश्वरो ह' इति व्याख्यातत्वात् तस्य दीर्घत्वे विन्दुयोगे च हामिति भवति । तदेव मन्त्रवीजाक्षर इत्युक्तम् । पृथ्वी लः । अग्नी रः । पवनाद्यः यः । अन्त्यः क्षः । वरुणः वः । अनिलः यः । सः सकारः । ईश्वरः हः । पाशः शः । माया हिः । एते दीर्घाः विन्दुयुक्ताः वीजाक्षराणि भवन्तीति प्रमाणार्थः । निर्ऋतिवरुणयोर्मध्ये ओं शं शेषाय नागाधिपतये गौरवर्णाय चक्रहस्ताय कूर्मवाहनाय वारुणीसहिताय श्रीविष्णुपार्षदाय नमः । इन्द्रेशानयोर्मध्ये ओं ह्रीं ब्रह्मणे सत्यादिसर्वलोकाधिपतये पद्महस्ताय हंसवाहनाय सरस्वतीसहिताय श्रीविष्णुपार्षदाय नमः ।

एवं चतुस्सङ्ख्याकावरणदेवेभ्यः अर्घ्यादिद्वादशोपचारान् प्रत्येकं उदकेन पुष्पैर्वा दद्यात् । न तु पीठदेवेभ्यः इव भगवता साकम् । धूपाद्युपचारास्तु भगवता साकमेवेति ज्ञेयम् । अत्र केचित् इन्द्रेशानयोर्मध्ये शेषस्य, निर्ऋति-वरुणयोर्मध्ये ब्रह्मणश्च पूजामाहुः । तत्तु 'अनन्तं वरुणस्यापि निर्ऋतेर्मध्यतो यजेत् । तथेन्द्रेशानयोर्मध्ये ब्रह्माणं च प्रपूजयेत्' (सं.प.७–१८५)इति विष्णुतीर्थीयवचनविरोधात् विचार्यम् ।

**... ततः पूज्या द्वादशद्वारपालकाः ।**
**प्रथमो वज्रनाभश्च हरीशश्च ततः परम् ।।**

**तृतीयो गाङ्गतनयस्ततः शङ्खनिधीश्वरः ।**
**जयश्च विजयः पश्चात् धाता सप्तमको मतः ।।**

**विधाता च ततो भद्रः सुभद्रोऽथामृतेश्वरः ।**
**विरूपाक्षोऽन्तिमश्चैव नमश्शब्देन पूजयेत् ।।**

अत्र द्वारपालविषये 'नमश्शब्देन पूजयेत्' इति विशिष्योक्त्या नैषां पीठावरणदेवेष्विव अर्घ्यादिभिः पूजा कार्या । किन्तु नमश्शब्देनैवेत्युक्तं भवति । तथा च वज्रनाभाय नमः । हरीश्वराय नमः । गङ्गातनयाय नमः । शङ्खनिधीश्वराय नमः । जयाय नमः । विजयाय नमः । धात्रे नमः । विधात्रे नमः । भद्राय नमः । सुभद्राय नमः । अमृतेश्वराय नमः । विरूपाक्षाय नमः ।

**वनस्पत्युद्भवेत्यादि मन्त्रैर्मूलपुरस्सरैः ।**
**धूपं दत्वा...**

धूपस्वरूपं तु पञ्चरात्रे निरूपितं –

चन्दनागुरुकर्पूरदेवदारूणि गुग्गुलः ।
जातीफलं श्रीफलं च उशीरं कोष्ठमेव च ।।

तथैव सालनिर्यासो दशाङ्गो धूप उच्यते ।
गव्याजनयुतं दद्याद्धूपं विष्णोर्मनोरमम् ।।' इति ।

'चन्दनं दशभागं तु नवभागस्तु गुग्गुलः ।
जातीफलं श्रीफलं च देवदारु तथैव च ।।

उशीरं चाष्टभागं स्यात्कोष्ठं षड्भागमीरितम् ।
कर्पूरं तु त्रिभागं स्यात्कृष्णागुरु तथैव च ।।

एवं दशाङ्गचूर्णेन धूपं दद्यात् ।

अत्र

'धूपयेद् व्यजनेनैव धूपं नाङ्गैर्विधूपयेत् ।
हस्तावाताहतं धूपं वस्त्रवाताहतं तथा ।।

मुखेन धमितं धूपं न देवाय समर्पयेत्'

इति वचनात् व्यजनेनैव धूपनं कार्यम् । 'घण्टानादं विना धूपं न विद्वान्दातुमर्हति ।' इति वचनाद्धण्टानादोऽपि धूपकाले कार्यः । एवं धूपकाले दीपकाले च भगवन्मूर्तिदर्शनं कार्यम् ।

धूपकाले दीपकाले कराभ्यां च प्रवन्दने ।
भक्त्या करोति यो नित्यं भगवन्मूर्तिदर्शनम् ।।

कुलकोटिं समुद्धृत्य याति विष्णोः परं पदम् । इति वचनात् ।

अत्र पूजाकाले स्वस्यापि गन्धाघ्राणस्यावर्जनीयत्वात् न निर्माल्यत्वदोषः शङ्क्यः ।

'पूजाकाले तु धूपानां गन्धः पुष्पादिकस्य च ।
दीपप्रभा नदीनां च निर्माल्यं दोषकृन्न हि ।। इति वचनात् ।

धूपसमर्पणे मन्त्रांश्च –

वनस्पत्युद्भवो धूपो गन्धाढ्यो गन्धवत्तमः ।
आघ्रेयस्सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ।।

'ध्येयस्सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं भवविरिञ्चिनुतं शरण्यम् ।
भृत्यार्तिहं प्रणतपालभवाब्धिपोतं वन्दामहे पुरुष ते चरणारविन्दम् ।।

'नारायणाय परिपूर्णगुणार्णवाय विश्वोद्भवस्थितिलयोन्नियतिप्रदाय ।
ज्ञानप्रदाय विबुधासुरसौख्यदुःखसत्कारणाय वितताय नमो नमस्ते ।।

'आर्मादुदारगुणवारिधिरप्रमेयो नारायणः परतमः परमात्स एकः ।
संशान्तसंविदखिलं जठरे निधाय लक्ष्मीभुजान्तरगतस्स्वरतोऽपि चाग्रे'

'तस्योदरस्थजगतस्सदमन्दसान्द्रस्वानन्दतुष्टवपुषोऽपि रमारमस्य ।
भूत्यै निजाश्रितजनस्य हि सृज्यसृष्टावीक्षा वभूव परनामनिमेषकान्ते ।

नारायणं सुरगुरुं जगदेकनाथं भक्तप्रियं सकललोकनमस्कृतं च ।
त्रैगुण्यवर्जितमजं विभुमाद्यमीशं वन्दे भवघ्नमसुरासुरसिद्धवन्द्यम् ।।

'जयति हरिरचिन्त्यस्सर्वदेवैकवन्द्यः
परमगुरुरभीष्टावापिदस्सज्जनानाम् ।।

निखिलगुणगणार्णो नित्यनिर्मुक्तदेहः
सरसिजनयनोऽसौ श्रीपतिर्मानदो नः ।।

'श्रीनृसिंह जय जय नृसिंह' इति पठेत् ।

**...ततो दीपं दद्यान्मूलमुदीरयन् ।।**

**साज्यं त्रिवर्तिमन्त्रेण...**

साज्यं त्रिवर्तिसंयुक्तं वह्निना योजितं मया ।
दीपं गृहाण देवेश त्रैलोक्यमितिरापह ।।'

भक्त्या दीपं प्रयच्छामि देवाय परमात्मने ।
त्राहि मां नरकाद्धोराद्दीपज्योतिर्नमोऽस्तु ते ।।

'आज्यं वर्तिसंयुक्तमित्येव पाठः । अत एव आज्यस्थापनार्थमेकार्तिकायां द्रोणाकार इति ज्ञापकं वर्णयन्ति । ततश्च एकार्तिकायां आज्यं स्थापयित्वा तत्र वर्तिकाः वह्नीः निधाय तत्र दीपज्वालासंयोजनं दीपशब्दार्थः । 'वहुवर्तिसमायुक्तं घृतपूरसमन्वितम् । कुर्यादारतिकं यो वै कल्पकोटिशतैरपि' इत्यादिवचनात् । आपादमौलिपर्यन्तं प्रादक्षिण्येन सार्धत्रिवारं भ्रामितं कृत्वा प्रदर्श्य शान्तं कुर्यात् । स्वयमेवनाशे महानर्थस्मरणात् । 'आपादमौलिपर्यन्तं प्रादक्षिण्यत्त्रिरर्धकम् । भ्राम्य प्रदर्श्य देवाय दीपं निर्वापयेत्ततः । स्वयमेव विनष्टं तु दीपं गृह्णन्ति राक्षसाः । तस्मान्निर्वापयेद्दीपं वृत्त्यै रक्षःक्षयाय च ।

अन्यथा नरकं याति यावदाभूतसम्प्लवम्' इति नारदीयवचनात् । 'त्रिवर्तिदीपनाशे तु बुद्धिपूर्वं कृते सति । देवा गृह्णन्ति तं दीपं राक्षसाद्यास्तदन्यथा' इति स्कान्दवचनाच्चेति ज्ञातव्यम् ।

**नैवेद्यविधिः**

**...ततो नैवेद्यमर्पयेत् ।**
**देवस्याग्रे भुवं शोध्य श्रीबीजं तत्र संलिखेत् ॥**

**नैवेद्यमुपरि स्थाप्य शुद्धतोयेन प्रोक्षयेत् ।**
**सौवर्णैरिति मन्त्रेण मूलमन्त्रेण मन्त्रयेत् ॥**

देवस्याग्रे पुरोभागे भुवं संशोध्य चतुरस्रमण्डलं कृत्वा तत्रोपरि श्रीबीजं लिखित्वा त्रिपादपीठं संस्थाप्य तत्र नैवेद्यम् ।

'प्रथमं त्वोदनं प्रोक्तं लवणं व्यञ्जनादिकम् ।
लेह्यं पेयं च चोष्यं च खाद्यं चैव चतुर्विधम् ॥

परमान्नं हरिद्रान्नं चित्रान्नं केवलं तथा ।
गुडोदनं च मुद्गान्नमित्यन्नं षड्विधं स्मृतम् ॥

भक्ष्याण्याग्नेयकोणे तु ईशान्यां पायसं न्यसेत् ।
नैर्ऋत्यां लेह्यपेयादिवायव्यामुपभोजनम् ॥

मध्ये चरुं स्थापयित्वा स्थापयेद्घृतपात्रकम् ।
परमान्नचरोर्मध्ये घृतपात्रं विनिक्षिपेत् ॥'

इति स्मृत्युक्तप्रकारेण तत्समीपे पानीयोदकं निधाय नैवेद्यसमर्पणार्थं विनियुक्तघृतपात्रातिरिक्तघृतपात्रं अनुयागार्थं स्थापयित्वा 'अन्नादिपदार्थकर्तारो देवाः' तान्

'अन्नं सरस्वती कुर्याद्भक्ष्यं वायुर्जगत्पतेः ।
पायसं भारती कुर्यात् ब्रह्मा कुर्यात्तथा हरेः ॥

सूपं कुर्यान्महालक्ष्मीर्घृतं नारायणाय वै ।
इन्द्रशच्यादिकास्सर्वाः कुर्युश्शाकादिकं हरेः ।।'

इत्युक्तरीत्या ध्यात्वा नैवेद्यं तुलसीदलेन सह नैवेद्योदकं गृहीत्वा मूलेनाष्टवारमभिमन्त्र्य 'नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात्' इति विष्णुगायत्र्या नैवेद्यं प्रोक्षयेत् । नैवेद्यं स्पृष्ट्वा

सौवर्णैस्स्थालिवर्यैर्मणिगणखचितैर्गोघृताक्तान्सुपक्वान् ।
भक्ष्यान्भोज्यांश्च लेह्यानपि परममहच्चोष्यमन्नं निधाय ।।

नानाशाकैरुपेतं दधि मधुसुघृतं क्षीरपानीययुक्तं ।
ताम्बूलं चापि विष्णोः प्रतिदिवसमहं मानसे चिन्तयामि ।।'

इति मन्त्रेण अभिमन्त्रयेत्

**अमृतस्राविणीं धेनुं नैवेद्योपरि चिन्तयेत् ।**
**धेनुमुद्रां प्रदर्श्यार्चां सुरभ्यै नम इत्यपि ।।**

अमृतीकरणार्थं 'धेनुमुद्रां स्रवद्धारां शुद्धां पूर्णां विचिन्तयेत्' इत्युक्तरीत्या 'कामधेनो अमृतं दुह' इति ध्यात्वा 'सर्वकामदुघे देवि सर्वतीर्थाभिषेचनि । पावने सुरभिश्रेष्ठे देवि तुभ्यं नमोऽस्तु ते ।' 'अमृतस्राविण्यै सुरभ्यै नमः' इति मन्त्राभ्यां धेनुमुद्रां प्रदर्श्य

**हुंफडन्तं सह स्वाहेत्युक्त्वा मुद्रां सुदर्शनीम् ।**
**गारुडीं चाथ सन्दर्श्य...**

संरक्षणार्थं ओं नमो भगवते सुदर्शनाय महाचक्राय हुं फट् स्वाहा' इति चक्रमुद्रां प्रदर्श्य, निर्विषीकरणार्थं 'पक्षिराजाय विद्महे, सुवर्णपक्षाय धीमहि, तन्नो गरुडः प्रचोदयात्' 'तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि । तन्नो गरुडः प्रचोदयात्' इति गरुडमुद्रां प्रदर्श्य, पवित्रीकरणार्थं 'ओं नमो भगवते पाञ्चजन्याय महाशङ्खाय सर्वपातालवासिनां विक्षोभकाय हुं फट् स्वाहा' इति

शङ्खमुद्रां प्रदर्श्य, अन्नस्य विपुलत्वाय मेरुमुद्रां शीतलत्वाय चन्द्रमुद्रां चेति मुद्राषट्कं प्रदर्शयेत् । सङ्ग्रहस्तु –

धेनुचक्रारिवीशाद्रिचन्द्राख्या मुद्रिकास्तु षट् ।।' इति गारुडे ।

तदनन्तरं देवदेवं रमानाथं सर्वान्तर्यामिणं हरिम् ।
आनीय पादुकाभ्यां तु वृहच्छालानिवेशनम् ।।

करावलम्बनं दत्वा चामरादिसुवैभवैः ।
कदलीकपित्थजम्बीरनानाफलविराजिते ।।

भ्राजन्मणिगणाकीर्णचतुस्स्थम्भात्मके शुभे ।
मण्डपे स्वर्णरत्नाढ्ये रम्यस्थलसुभास्वरे ।।

वज्रस्फटिकवैडूर्यषड्सोपानविराजिते ।
उपवेश्य पुरः पत्रं कदलीसंज्ञकं स्मरेत् ।।

प्रदीप्य दीपौ पार्श्वे द्वौ स्वर्णस्तम्भे घृतादिभिः ।
तस्योपरि स्वर्णपात्रं तस्मिन् स्थूलाणुवाटिकाः ।।

स्थूलोदपात्रमपि च तत्समीपे न्यसेद्बुधः ।
केशवादिचतुर्विंशद्ब्राह्मणांस्तु प्रकल्पयेत् ।।

केशवाद्यास्साक्षिभोज्या तथानन्तासनादिकाः ।
असाक्षिभोजनं यस्तु कुरुते कारयेत्कुधीः ।।

पुत्रमित्रकलत्रादिसहितस्सपतेद्ध्रुवम् ।
स्वयं ससाक्षिभोजी स्याद्धरेरपि तथाचरेत् ।।

तावत्कर्तुमशक्यं चेदनन्तासनपञ्चकैः ।
भोजनीयं स्वर्णपात्रे जीवान्तर्यामिणं हरिम् ।।

अनन्तासनवैकुण्ठश्वेतद्वीपहृदब्जगान् ।
पद्मनाभविकुण्ठश्रीनारायणसुपूरुषान् ।।

आदित्यसंस्थसवितृनामकेन सहार्चयेत् ।

इत्युक्तरीत्या सर्वमनुसन्धाय

'अन्नाभिमानी चन्द्रस्तु विचिन्त्य केशवः परः ।
भारती परमान्नस्था देवो नारायणः प्रभुः ।।

भक्ष्येषु सूर्योऽधिष्ठाता विचिन्त्यस्तत्र माधवः ।
घृताभिमानिनी लक्ष्मीर्गोविन्दस्तत्र देवता ।।

सरस्वती क्षीरनिष्ठा विष्णुं तत्र विचिन्तयेत् ।
चतुर्मुखो मण्डमानी विचिन्त्यो मधुसूदनः ।।

नवनीतं वायुदेव्यं चिन्त्यस्तत्र त्रिविक्रमः ।
दधिस्थौ सोमवरुणौ वामनस्तत्र देवता ।।

सूपाभिमानी गुरुडश्श्रीधरस्तत्र देवता ।
मित्रस्तु पत्रशाकानां हृषीकेशस्तु देवता ।।

शेषस्तु फलशाकेषु पद्मनाभस्तु देवता ।
गौरी सर्वाम्लवस्तुस्था तत्र दामोदरस्स्मृतः ।।

अनाम्लद्रव्यगो रुद्रश्चिन्त्यस्सङ्कर्षणः परः ।
शर्करा गुडपश्शक्रो वासुदेवस्तु तत्रगः ।।

उपस्करस्थो वागीशः प्रद्युम्नस्तत्र देवता ।
कटुद्रव्यपतिर्धर्मो ह्यनिरुद्धस्तु तत्रगः ।।

रामठेलासर्षपश्रीखण्डकर्पूरगस्स्मरः ।
देवता तत्र भगवान्साक्षाच्छ्रीपुरुषोत्तमः ।।

घूर्णमेधेयतैलेयपक्वपश्चेन्द्रनन्दनः ।
अधोक्षजस्तत्र देवस्तिलकूष्माण्डमाषकैः ।।

निर्मिते तु पतिर्दक्षो नारसिंहस्तु तत्रगः ।
मनुराजो माषभक्षपतिश्चिन्त्योऽच्युतः प्रभुः ।।

लवणस्थो हि निर्ऋतिर्देवता तु जनार्दनः ।
फलतद्रसयोः प्राण उपेन्द्रस्तत्र देवता ।।

गङ्गां ताम्बूलगां विद्धि श्रीहरिस्तत्र देवता ।
बुधस्स्वादूदकपतिश्श्रीकृष्णस्तत्र देवता ।।

पुष्करस्सर्वसिद्धेशश्रीहंसस्तत्र देवता ।
सर्वस्वादुरसावीशा रतिर्विश्वस्तु तत्रगः ।।

स्थालीपतिस्स्वयं वह्निर्भार्गवस्तत्र देवता ।
करीषकाष्ठमानी तु वसन्त ऋषभः प्रभुः ।।

श्रीदेवी पाकर्तृस्था तत्र विश्वम्भरः प्रभुः ।
नैवेद्यमण्डलस्था भूर्वराहस्तत्र देवता ।।

तदूर्ध्वभागयोर्विघ्नस्तत्र ध्येयः कुमारकः ।
विष्वक्सेनस्त्वारण पुरुषस्तत्र देवता ।।

रमाश्रीतुलसीसंस्था कपिलस्तत्र देवता ।
दुर्गा भोजनपात्रस्था सत्याख्यः तत्र देवता ।।

पात्रपा वारुणी देवी चानन्दस्तत्र देवता ।।'

इति स्मृत्यनुसारेण अन्नाद्यभिमानिदेवताः तत्र भगवन्मूर्तीश्चानुसन्धाय तथा

'परिवेषयतीशं श्रीर्मुख्यप्राणस्तु वीजयेत् ।
भारत्याद्याः परिचरन्त्यो जयाद्या द्वारपालकाः ।।

इत्युक्तरीत्या लक्ष्म्यादिव्यापारानननुसन्धाय

...गृहीत्वाथ करे जलम् ॥
परिषिंचामि सत्यं त्वर्तेनेति च क्रमाद्वदेत् ।
परितः सिञ्चयेत्तोयं तत आपोशनं क्षिपेत् ॥

हस्तेन उदकं गृहीत्वा नैवेद्यं 'सत्यं त्वर्तेन परिषिञ्चामि' इति परिषिच्य

महालक्ष्म्या सुधारूपं करे ते दक्षिणेऽनघ ।
आपोशनं दीयमानं पिब देव रमापते ॥

सुधारसं सुविपुलमापोशनमिदं तव ।
गृहाण त्वं सुरश्रेष्ठ यथेष्टमुपभुज्यताम् ॥

इति मन्त्रमुदीर्याथ देवदक्षिणहस्तके ।
लक्ष्म्या प्रदीयमानं च सुधारसमयं शुभम् ॥

आपोशनमिदं ध्यात्वाऽमृतोपस्तरणमसि ।
इत्युक्त्वापोशनोच्छिष्टं जले पात्रान्तरे क्षिपेत् ॥

इति मन्त्रानुच्चार्य दक्षिणकरे लक्ष्मीः स्वहस्तेन सुधारसमयं शुभमापोशनं ददातीति अनुसन्धाय 'अमृतोपस्तरणमसि' इति मन्त्रमुच्चार्य प्रोक्षणोच्छिष्टं जलं पात्रान्तरे क्षिपेत् ।

ततः प्राणात्मने पूर्वमुक्त्वा नारायणाय च ।
स्वाहन्तमिति पञ्चैता आहुतीः क्रमशो वदन् ॥

ओं प्राणात्मने श्रीनारायणाय स्वाहा प्राणात्मने नारायणायेदं न मम । ओं अपानात्मने श्रीवासुदेवाय स्वाहा अपानात्मने श्रीवासुदेवायेदं न मम । ओं व्यानात्मने श्रीसङ्कर्षणाय स्वाहा व्यानात्मने श्रीसङ्कर्षणायेदं न मम । ओं उदानात्मने श्रीप्रद्युम्नाय स्वाहा उदानात्मने श्रीप्रद्युम्नाय न मम । ओं समानात्मने श्री अनिरुद्धाय स्वाहा समानात्मने श्री अनिरुद्धायेदं न मम । इति उच्चरन् ।

**शङ्खतोयं क्षिपेत् पात्रे प्रत्याहुत्येकपात्रकम् ।**
**मधुवाता तथा स्वादु भोजं त्वेति पठेदृचः ।।**

प्रत्याहुतिशङ्खोदकं पात्रे क्षिपेत् । 'मधुवाता ऋतायते...माध्वीर्गावो भवन्तु नः' (ऋ.सं.१–९०–६) तृचः । 'स्वादुः पवस्व...मधु मामदाभ्यः' (ऋ.सं.९–८५–६)

'भोजं त्वामिन्द्र वहं हुवेम दधिष्वमिन्द्रापांसि वाजान् ।
अविड्ढीन्द्र चित्रया न ऊती कृधि वृषन्निन्द्र वस्यसो नः ।
(ऋ.सं.१–१७–८)

भोजमश्वाः सुष्ठुवाहो वहन्ति सुवृद्रथो वर्तते दक्षिणायाः ।
भोजं देवासोऽवता भरेषु भोजः शत्रून्त्समनीकेषु जेता ।
(ऋ.सं.१०–१०७–११)

स्तविष्यामि त्वामहं विश्वस्यामृतभोजन । अग्ने त्रातारममृतं
मियेध्य यजिष्ठं हव्यवाहन । (ऋ.सं.१–४४–०५)

इति ऋचः पठेत् । अत्र 'भोजं त्वेति मन्त्रस्यायमर्थः । ' हे इन्द्र भोजं – भक्तोपहृतनैवेद्यस्वीकर्तारं त्वां वयं हुवेम – स्तुमः । हे इन्द्र त्वं अपांसि – वीर्याणि, वाजान् –अन्नानि च ददिः –दाता हे इन्द्र चित्रया –विचित्रया भक्त्या विशिष्टानां नः –अस्माकं ऊतीः–रक्षणानि अविड्ढि–निधेहि । हे इन्द्र वृषन् – इटवर्षकत्वं यस्य सः पूजाकर्तॄणां नः शं कृधि – कुरु' इति । अत्र पवित्रपदार्थानामेव समर्पणं कार्यम्, न त्वपवित्रपदार्थानाम् । अपवित्रत्वादेव । ननु अपवित्राणामपि पलाण्ड्वादीनां कुतो न समर्पणम् । तद्गतदुर्गन्ध-दुष्टरसादीनां भगवद्घ्राणरसनादिजन्यानुभवाविषयत्वे भगवतः सार्वज्ञाभावप्रसङ्गेन तदनुभवरूपभोगस्य अवश्यमङ्गीकर्तव्यत्वात् । न ह्यस्मदादीनामिव ईश्वरस्यापि तद्भोगेन दुःखावाप्तिः शङ्कितुं शक्यते । स्वतन्त्रेण मया अनुभूयमानमपि दुर्गन्धादिकं मे दुःखहेतुर्मा भूदिति तदिच्छयैव

दुःखासाधनत्वोपपत्तेः । 'अनुभूयमाना अपि दुर्गन्धाद्या न फलहेतवः' इति प्रमेयदीपिकायां टीकाकारैरेव दुर्गन्धादीनामनुभवरूपभोगस्य, तत्प्रयुक्तदुःख-साधकत्वाभावस्य च निरूपितत्वाच्च । यदा दुर्गन्धाद्युपेतानां पलाण्ड्वादीनां भोगविषयता, तदा तद्रहितानां वृन्ताकादीनां सुतराम् । तथा च अपवित्रपदार्थसमर्पणं कुतो न कार्यमिति चेत् । सत्यम् । तथापि तेषां समर्पणेनाधिकारिणः तत्र तत्र पुराणेषु महापराधप्रतिपादनात् असमर्पणोपपत्तेः । अत एव नवमे 'पत्रं पुष्पं' इत्यत्र गीताभाष्ये 'न त्वविहितपत्रादि । तस्यापराधत्वोक्तेर्वाराहादौ' (भ.गी.९–२६)इत्युक्तमिति ज्ञातव्यम् । ननु 'अवतारेषु स्थूलमपि भुङ्क्ते' इति गीताभाष्ये रामकृष्णाद्यवताररूपाणां स्थूलपदार्थभोगस्य स्वीकृतत्वेऽपि तथैव स्थूलानशनोक्तेरिति तदितररूपाणां स्थूलाशनस्यापि प्रतिपादनात् नैवेद्यसमर्पणेन भक्तानुग्रहाय भगवता क्रियमाणो भोगः कथमनुसन्धेयः इति चेत् शृणु । यथा प्रजाभिरानीतं उपायनं राजा स्वीकृत्य त्रेधा विभज्य उत्तमं स्वयं गृहीत्वा मध्यमं भार्यायै दत्वा अधमं पुत्रादिभ्यो ददाति, एवं भगवानपि भक्तैः समर्पितं नैवेद्यं स्वीकृत्य त्रेधा विभज्य उत्तमं स्वयं गृहीत्वा मध्यमं रमायै दत्वा अधमं ब्रह्मादिभ्यो ददाति इति । इयांस्तु विशेषः । रमायै मध्यममाघ्राय ददाति । ब्रह्मादिभ्यः अधमं दृष्ट्या स्वीकृत्य ददातीति । घ्राणेन्द्रियेण सम्भुक्तशेषं तस्यास्समर्पयेत्' इति वचनात् । तथा 'आस्वादितं तु हरिणा विमलैश्शुभदृष्टिभिः । तत्सर्वं प्रार्थयेत्तेषां तारतम्यक्रमेण तु' इति वचनात् । एवं च 'अदनाघ्राणदृष्ट्याख्य-भोगत्रयविभागतः । मुखनासाचक्षुषां तद्योग्यमन्नं त्रिधा स्मृतम्' इत्यादि भगवत्पादीयवचनान्यपि समञ्जसानि भवन्ति ।

यद्यपि भगवदेकभोग्यानां मुखेनादनकाले आघ्राणनं दर्शनं चावर्जनीयमेव । तथापि रमाभोग्यनामाघ्राणनमात्रम् । ब्रह्मादिभोग्यानां च दर्शनमात्रं भगवदेकभोग्यानां अदनादिभोगत्रयमस्तीति विशेषोऽनुसन्धेयः ।

तदनन्तरं 'अथ तिष्ठति यत्किञ्चित्कल्पितं चापरं गृहे । पक्वमन्नं सुपानीयं सर्वोपस्करसंयुतम् । यथाकालं मनुष्याद्यैर्भोक्ष्यमाणं शरीरिभिः । तत्सर्वं विष्णुपूजास्तु प्रीयतां मे जनार्दनः' इत्युक्त्वा 'श्रीनिवास नमस्तुभ्यं महानैवेद्यमुत्तमम् । नित्यतृप्त गृहाणेदं कृपया भक्तवत्सल । भगवन् श्रीपते न्यस्तं नैवेद्यं त्वत्पुरो मया । कपिलात्मक दिव्येन चक्षुषा त्ववलोकय । नृसिंहात्मक दिव्येन दिव्यघ्राणेन्द्रियेण तु । तद्वस्तुनिष्ठं गन्धं च दिव्यमाघ्राय चिन्मय । भृगुरामस्वरूपेण वागिन्द्रियेण तु । सान्त्वय श्लक्ष्णया वाचा भक्तं मामनुकम्पय । कृत्वा पवित्रं पूतं च तत्तत्स्वादुरसैर्युतम् । महाकूर्मस्वरूपेण दिव्यजिह्वेन्द्रियेण तु । आस्वादय स्वादु रम्यं भुङ्क्ष्व देव रमापते । अगण्ययापराधान्मे प्रसादं कुरु केशव । इति विज्ञाप्य देवेशं नैवेद्यं ह्यर्पयेत्सुधीः' इत्युक्तप्रकारेण नैवेद्यं समर्पयेत् । अत्र दीयमानमन्नवस्त्रादिकं हरेः सिद्धमेव । स्वतन्त्रत्वात् । तथापि स्वप्रयोजनाय समर्पयेत् । तदुक्तं छान्दोग्यभाष्ये(५–१) 'सिद्धमेवान्नवस्त्रायं विष्णोस्स्वातन्त्र्यतस्सदा । स्वार्थं समर्पयेद्विष्णौ यथा प्राणे सुराः प्रजाः' इति । ततश्च अवाप्तसकलकामस्य अपरिमितानन्दमहोदधिरूपस्य हरेः प्राकृतस्यान्नादेर्भोगेनैव तृप्तिः । तदभावे न तृप्तिरस्माकमिवेति नास्ति । समुद्रसूर्ययोरुदकाञ्जलिदीपदानाभ्यामिव । अतो भगवान् हरिः उत्तममेव षड्रसान्नं गृह्णाति । अन्यत् न गृह्णाति । उत्तमं जलमेव गृह्णाति । अन्यन्नेति नास्ति । किन्तु भक्तैर्भक्तिपूर्वं देशकालाद्यनुसारेण दीयमानं तत्तत्कर्मविहितद्रव्यात्मकं भक्तानुग्रहाय स्वयं स्वीकृत्य तत्तत्कर्माभिमानिरमादिभ्यः स्वीकारयति । तद्द्वारा प्रीतः फलं ददाति । 'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः' इत्याद्यनुसन्धेयम् ।।

'एवं ध्यात्वा जगद्धातुर्नैवेद्यस्य समर्पके ।
मुख्यप्राणः पतिर्योग्यो यज्ञाख्यस्तत्र देवता ।।

वायुमुद्रां मक्षिकादिस्पर्शदोषनिवृत्तये ।
विषनिर्हरणार्थाय तार्क्ष्यमुद्रां प्रदर्शयेत् ।।

सुधारसस्य सिद्ध्यर्थं धेनुमुद्रां प्रदर्शयेत् ।
ज्ञानपूर्वं विचिन्त्यैवं हृदिस्थेनाविना स्थितम् ।।

सालिग्रामादिगेनैक्यं विचिन्त्य परमेशितुः ।
स्वतन्त्रनिर्दोषगुणपूर्ण ज्ञेय विमुक्तिद ।।

निस्स्पृहेश्वर सर्वेश शुभसारभुगव्यय ।
अप्रमेय रमाब्रह्मरुद्रेन्द्रादिनमस्कृत ।।

सत्यसङ्कल्पकरुणानिधे नित्यनिरामय ।
भक्तवत्सल पाहीति प्रार्थ्य देवेश्वरं हरिम् ।।

नारायण त्वत्स्वरूपरसांल्लक्ष्म्यात्मकान्रसान् ।
भुङ्क्ष्वाथो प्राकृतान्दृष्ट्वा शुद्धीकुरु जगत्पते ।।

पूर्वमापः प्रदत्वेशं ध्यायन्नष्टोत्तरं जपन् ।
उत्तरापोशनं हस्तप्रक्षालनजलं हरेः ।।

दत्वा कृत्वा तु भूशुद्धिं पुनस्सम्प्रार्थयेद्धरिम् ।
अनन्तरूपेण रमा त्वत्पूजां कर्तुमञ्जसा ।।

न शशाकाल्पसारोऽहं नेशोऽस्मीति किं वदे ।
क्षमापयापराधान्मे दयासागर ते नमः ।।

इति । अत्र 'सश्रीकपरिवाराय नैवेद्यं हरयेऽर्पयेत् ।' इति योगदीपिकावचनात् 'भुञ्जानं रमया सार्धं क्रीडमानं मुदान्वितम्' इति वाराहवचनाच्च सपरिवारायैव हरये समर्पणं कार्यम् । 'धूपदीपादिकं सर्व सर्वेभ्यो विष्णुना सह' इति तिलकवचनानुसारेण वाय्वादिपीठदेवातानां रमाद्यावरणदेवतानां विष्णुना सहैव नैवेद्यभोगः अवश्यमङ्गीकर्तव्यः । तत्र चान्यदेवतात्वस्य अविशेषे सत्यपि पीठदेवतादिकूटप्रविष्टानां वाय्वादीनां

भगवता सहैव नैवेद्यसमर्पणम् । तदप्रविष्टानां च भगवन्नैवेद्यसमर्पणानन्तरं तद्भुक्तशेषसमर्पणमित्यङ्गीकारे अर्धजरतीयप्रसङ्गात् तदप्रविष्टानां देवतानामपि भगवता सहैव समर्पणं युक्तं इति केषाञ्चित्सिद्धान्तः । अपरेषां सिद्धान्तस्तु'रमाब्रह्मादिदेवानां दत्वा तीर्थादिकं बलिम् । इत्यत्र भगवते नैवेद्यसमर्पणानन्तरमेव अन्यदेवेभ्यः तद्भुक्तशेषसमर्पणस्य वक्ष्यमाणतया तदनुरोधेन अस्मन्मठे बहुतरशिष्टेषु च तथैव समर्पणस्य परम्पराप्राप्तत्वात् भगवद्भुक्तशेषस्यैव तेभ्यः समर्पणम् । अन्यदेवतात्वस्याविशेषेऽपि पीठदेवतादिकूटप्रविष्टाप्रविष्टत्वाभ्यामेव वैलक्षण्यसद्भावेन अर्धजरतीयानवकाशात् । अत्र वचनानामन्योन्यविरोधः ऋषिभेदेनैव परिहार्य इति ज्ञातव्यम् ।

अत्रैकादश्यां एतादृशान्नादिसमर्पणाभावात् फलसमर्पणम् । तत्र मन्त्रस्तु

'पूर्णानन्दमहोदधे प्रियतमा भल्लातकी दाडिमा ।
चूतोदारिकनारिकेलबदरी मुख्ये त्वदीये दिने ।।

खर्जूरं कदली रसालपनसं द्राक्षाकपित्थादिकं ।
सर्वं स्वाद्वमृतोपमं नवनवं सङ्गृह्यतामच्युत ।।'

इति । एकादश्यां फलादिसमर्पणमपि न कार्यमिति सदाचारस्मृतिव्याख्याने वेणुपल्लीश्रीनिवासाचार्यैः समर्थितं तत एवानुसन्धेयम् । एतेन चातुर्मास्ये नैवेद्यसमर्पणकाले 'सौवर्णे' इति मन्त्रो न पठनीय इति भाति ।

**पानीयमर्पयेत्पश्चात्...**

'गङ्गोदकं समानीतं हेमकुम्भेन निर्मलम् । गृह्यतां मे हृषीकेश प्रसीद पुरुषोत्तम' इति मन्त्रेण मध्ये पानीयं समर्प्य ।

**...ततो जवनिकां क्षिपेत् ।**
**भुञ्जानं चिन्तयेन्मूलं जपेदष्टोत्तरं शतम् ।।**

जवनिकां क्षिप्त्वा भुञ्जानं भगवन्तं चिन्तयन् मूलमन्त्रमष्टोत्तरशतवारं जपेत् । ततः अनुयागं कुर्यात् । सानुयागपूजाया महाफलत्वात् । तदुक्तं नारदीये –

> सानुयागा तद्रहिता द्विविधार्चा प्रकीर्तिता ।
> तत्राद्यानन्तफलदा द्वितीया सफला मता ।।
>
> तस्मात्प्रयत्नः कर्तव्यस्सानुयागार्चने हरेः ।।'

इति तत्प्रकारस्तु – देवस्य धूपदीपसमर्पणात्प्रागेव मूलग्रन्थोक्तलक्षणे कुण्डे स्थण्डिले वा सूत्रोक्तप्रकारेण अग्निं प्रतिष्ठाप्य अन्वाधानाद्याज्यसंस्कारान्तं कृत्वा वैष्णवाग्निसिद्धिं कृत्वा इध्माधानाद्याज्यभागान्तं हुत्वा उक्तप्रकारेण पीठपूजां विधाय अग्न्यन्तर्गतपरशुराममावाह्य अर्घ्याद्यावरणान्तोपचारं कृत्वा देवेन सह धूपदीपौ देवाय नैवेद्यं समर्प्य नैवेद्यकाले एव होमार्थं पृथक्कृत्य नैवेद्येन सह स्थापितेन वा अन्नाद्यैर्वा मूलमन्त्रेण अष्टोत्तरं पुष्पाञ्जलिपूर्वकं हुत्वा सकृत्सकृत् पुष्पाञ्जलिपूर्वकं पीठावरणदेवेभ्यश्चतुराज्याहुतीः जुहुयात् ।

> **उत्तरापोशनं पश्चादमृतापिधानमसि ।**
> **इत्युक्त्वापोशनोच्छिष्टजलं पात्रान्तरे क्षिपेत् ।।**

अमृतोपीतिमन्त्रेण उत्तरापोशनं दत्त्वा आपोशनोच्छिष्टं जलं पात्रान्तरे क्षिपेत् । 'महालक्ष्म्या दीयामानं करे ते दक्षिणेऽनघ । उत्तरापोशनं दिव्यं पिब देव रमापते' इति प्रार्थ्य 'अमृतापिधानमसि' इति मन्त्रेण उत्तरापोशनार्थं प्राग्दत्तोदकशेषं प्रात्रान्तरे निक्षिप्य नैवेद्यं विष्वक्सेनाधीनं कृत्वा हस्तप्रक्षालनार्थमागच्छेति विज्ञाप्य पादुके दत्वा पीठान्तरस्थिताय देवाय

> **वामे गण्डूषपात्रं स्यात्तत्र गण्डूषमर्पयेत् ।**
> **हस्तप्रक्षालनं दत्वा(तत्र)...**

मूलेन द्वादश गण्डूषान् दत्वा हस्तौ शोधयित्वा 'चन्दनं च सकर्पूरं कस्तूर्यादिसमन्वितम् । करोद्वर्तनकं देव प्रीत्यर्थं प्रतिगृह्यताम्' इति मन्त्रेण

करोद्वर्तनार्थं देवस्य हस्ते गन्धं दत्वा दन्तशोधनं प्रादप्रक्षालनं पुनर्द्वादशगण्डूषांश्चार्पयित्वा ।

**...पश्चादाचमनं क्षिपेत् ॥**

**मूलेन पुष्पत्रितयमर्पयित्वा**

आचमनार्थमुदकं दत्वा मूलमन्त्रेण पुष्पत्रितयं समर्प्य वाद्यादिवैभव-पुरस्सरं मुक्तागुच्छैर्लम्भमाने आसने ताम्बूलभोगार्थं देवमुपवेशयेत् । तदुक्तं – 'पानीयं च ततो दत्वा उत्तरापोशनं तथा । तथैवाचाम्य देवेशं पीठान्तरमुपाविशेत् । गण्डूषं हस्तपादादिशोधनं दन्तशोधनम् । पुनर्द्वादश-गण्डूषान्दत्वा वाद्यादिवैभवैः । मुक्तागुच्छैर्लम्बमाने ह्यासने प्रविशेद्धरिम्' 'ततो लक्ष्म्यादिषड्रूपा ताम्बूलस्थापिका मुखे' इत्यनुसन्धाय ततो वदेत् ।

**पूगीफलं सकर्पूरं नागपर्णसमन्वितम् ।**
**(सखदिरचूर्णकर्पूरसंयुतम्) ॥**

**गृहाणचूर्णसंयुक्तं ताम्बूलं सुमनोहरम् ।**
**(नागवल्लीदलैर्युक्तं ताम्बूलं गृह्यतां विभो ।)**
**इति ताम्बूलकं दद्यात् नाकस्येति च दक्षिणाम् ॥**

हिरण्यं दक्षिणं दत्वा तदनन्तरं गण्डूषपात्रं स्थापयित्वा गण्डूषं दन्तधावनं आचमनं च कारयित्वा पादुके च समर्प्य पुनर्धूपं महानीरजानादिपूजार्थं पुनः पूजास्थानं प्रति आगच्छ इति विज्ञाप्य 'पूर्वैर्ब्रह्मादिभिश्चैव वाद्यघोषेन चैव हि । पीठे संस्थापयेद्देवमेवं नियमकृद्बुधः । नीराजयेत्ततो देवं कर्पूरार्तीस्सुमङ्गलाः ।' इत्युक्तरीत्या महावैभवपूर्वकं देवं पूजास्थानं प्रापय्य पुनर्धूपमहानीराजनं कुर्यात् । पुनर्धूपमन्त्रस्तु –

**जयत्यादिपठन्मन्त्रान् पुनर्धूपं समर्पयेत् ।**
**(पुनर्धूपं समर्प्य च ।)**

जयत्यजोऽखण्डगुणोरुमण्डलस्सदोदितो ज्ञानमरीचिमाली ।
स्वभक्तहार्दोचतमोनिहन्ता व्यासावतारो हरिरेकभास्करः ।।१।।

जयत्यजोक्षीणसुखात्मबिम्ब स्वैश्वर्यकान्तिप्रततस्सदोदितः ।
स्वभक्तसन्तापदुरिष्टहन्ता रामावतारो हरिरीशचन्द्रमाः ।।२।।

जयत्यसङ्गत्योरुबलाम्बुपूरो गुणोच्चरत्नाकर आत्मवैभवः ।
सदा सदात्मज्ञनदीभिराप्यः कृष्णावतारो हरिरीशसागरः ।।३।।

अगण्यदिव्योरुगुणार्णवः प्रभुस्समस्तविद्याधिपतिर्जगद्गुरुः ।
अनन्तशक्तिर्जगदीश्वरेश्वरस्समस्तदोषातिविदूरविग्रहः ।।४।।

शुभमरकतवर्णो रक्तपादाब्जनेत्राधरकररसनाग्रश्चक्रशङ्खाब्जरेखः ।
रविकरवरगौरं चर्मचैणं वसानः तटिदमलजटासत्सान्द्रचूडां दधानः ।।५।।

विस्तीर्णवक्षाः कमलायताक्षो वृहद्भुजः कम्बुसमानकण्ठः ।
समस्तवेदान्मुखतस्समुद्गिरन्ननन्तचन्द्राधिककान्तिसन्मुखः ।।६।।

प्रबोधमुद्राभयदोर्द्वयाङ्कितो यज्ञोपवीताजिनमेखलोल्लसन् ।
दशामहाज्ञानभुजङ्गदष्टममुज्जीवयानो जगदत्यरोचत ।।७।।

नमो नमोऽगण्यगुणैकधाम्ने समस्तविज्ञानमरीचिमालिने ।
अनाद्यविज्ञानतमोपहन्त्रे परामृतानन्दपदप्रदायिने ।।८।।

**अर्चतेत्यादिकान् मन्त्रान् पठन्नीराजयेद्धरिम् ।।**

'अर्चत' । 'निषुसीद' । वयस्सुपर्णा उपसेदुरिन्द्रं प्रियं मेधा ऋषयो नाधमानाः । अपध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेवबद्धान् । श्रियं जातश्रिय आनिरयाय श्रियं वयोजरितृभ्यो दधाति । श्रियं वसाना अमृतत्वमायन्भवन्ति सत्या समिथा मितद्रौ । श्रिय एवैनं तच्छ्रियमादधाति सन्तं तमृचा वषट्कृत्य सन्तृष्ट्यै सन्धीयते प्रजया पशुभिर्य एवं वेद' । साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यं महाधिपत्यमयं समन्तपर्यायै स्यात्सार्वभौमस्सार्वायुप आन्तादा परार्धात्पृथिव्यै

समुद्रपर्यन्ताया एकराळिति ।' ते एते अभ्यनूच्यते अग्रेर्गायत्र्या भवत्सयुग्वेति कल्पते ह वा अस्मै योगक्षेम उत्तरोत्तरेणेह श्रियमश्नुतेश्नुते ह प्रजानामैश्वर्यामाधिपत्यम् । तदप्येषश्लोकोभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे । आविक्षितस्य कामप्रेर्विशेदेवास्सभासद इति' तदस्तु मित्रावरुणा तदग्ने शंयो रस्मभ्यामिममस्तु शस्तम् । अशीमहि गाधमुत प्रतिष्ठां नमो देवे दाहते साधनाय' प्राची दिशं जयति । तं प्रत्यश्चमावर्तयन्ति तेन प्रतीचीं दिशं जयति । तमुदीचास्तिष्ठत उपाहरन्ति तेनोदीचीं दिशति । सोमेन राज्ञा सार्वां दिशो जयति य एवं वेद । ' अप्रक्षितं वसु बिभर्षि हस्तयो रषाल्हं सहस्तन्विश्रुतो दधे । आवृत्तासो वप्तासो न कर्तृभिस्तं भूषते क्रतव इन्द्र भूरयः । 'यश्छन्दसामृषभो....वितन्वाना । आमायन्तु ब्रह्मचारिणस्स्वाहा । धातरायन्तु सर्वतस्स्वाहा । इत्यन्तम् । 'स्वामिनः फलश्रुतेरित्यात्रेयः । 'ब्रह्मविदाप्नोति परम् ।' फलं स्वामिना देवानामेव भवति । यदु किञ्चेमाः प्रजाश्शुभमाचरन्ति । । देवा एतदाचरन्ति । यदु किचेमाः । प्रजा विजानते । देवा एव तद्विजानते । देवानां ह्येतद्भवति । स्वामी हि फलमश्नुते । नास्वामी कर्म कुर्वाणः' 'मङ्गलं भगवान्विष्णुर्मङ्गलं गरुडध्वजः । मङ्गलं पुण्डरीकाक्षो मङ्गलं मधुसूदनः ।' ओं नमो नारायणाय ओं । नीराजनं समर्पयामीति वदेत् । इदं च नीराजनं घृताक्ताभिः तिलतैलाक्ताभिः वा दीपसंयुक्ताभिः चतुरङ्गुलदीर्घाभिर्वा आपादतलमस्तकं त्रिः प्रभ्राम्य वामभागे विसर्जयेत् । एवं कर्पूरेणापि नीराजनं कार्यम् । एवं बहूनि नीराजनानि कुर्यात् । 'नीराजनं पुनः कार्यं कर्पूरं विभवे सति' इति स्कान्दवचनात् । नीराजनकाले देवस्य मुखमवलोकनीयम् ।

'कोटयो ब्रह्महत्यानामगम्यागमकोटयः ।
दहत्यालोकमात्रेण विष्णोस्स्वारार्तिकं मुखम् ।।

इति महाफलश्रवणात् ।

**पुष्पाण्यष्टौ समर्प्याथ मूलमन्त्रेण वैष्णवः ।**
**वेदमन्त्रैश्च पौराणैरर्पयेत्कुसुमाञ्जलिम् ॥**

'अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः ।
सर्वभूतदयापुष्पं क्षमापुष्पं ततः परम् ॥

ज्ञानपुष्पं तपःपुष्पं ध्यानपुष्पं तु सप्तमम् ।
सत्यं चैवाष्टमं पुष्पमेभिस्तुष्यति केशवः ॥'

इत्युक्तानि अष्टौ पुष्पाणि समर्प्य 'नमो महद्भ्यः'(ऋ.सं.१–२७–१३) १) 'ममत्तु नः' (ऋ.सं.१–१२२–३) २) कथा ते अग्ने (ऋ.सं.१–१४७–१) ३) यज्ञेन यज्ञं(ऋ.सं.१–१६४–५०) इति ऋक्चतुष्टयं पठित्वा 'राजाधिराजाय... स्वस्ति साम्राज्यं भौज्यं सभासदः' इति 'यो वैतां ब्रह्मणो वेदानमृतेनामृतां पुरीम् । तस्मै ब्रह्म च ब्रह्मा च चायुष्कीर्तिं प्रजां ददुः' इति मन्त्रपुष्पं समर्पयेत् ।

**चामरं दर्पणं छत्रं वाहनादि निवेदयेत् ।**
**महाराजोपचारांश्च गीतवादित्रनृत्यकान् ॥**

**सर्वान् निवेदयेद् भक्त्या मूलमन्त्रेण साधकः ।**

यद्यप्येषामनूपचाराणां मध्ये मुखवस्त्रस्य भोजनोत्तरभाविगण्डूपताम्बूल-चर्वणोत्तरभाविगण्डूषानन्तरमवश्यंसमर्पणीयत्वात् ताम्बूलस्य भोजनान्तरं समर्पणीयतया दर्पणपादुकयोस्तत्र उपचाराङ्गतया तत्र तत्र समर्पणीयत्वात् समर्पितानां पुनस्समर्पणोक्तिरनुपपन्नैव । तथापि प्रागर्पणीयानां मुखवस्त्रादीनां प्रत्यक्षभूतानां तत्स्थाने तुलसीदलानां वा तेभ्योऽतिरिक्तानां तत्तदतिरिक्तानां तत्तदुपचाराङ्गतया अवान्तरोपचारत्वेनैवार्पणम् । एतेषां तु प्रत्यक्षभूतानां तत्स्थाने तुलसीदलानां वा अनूपचारतयैवार्पणमभिप्रेत्येयमुक्तिरिति ज्ञातव्यम् ।

ननु षोडशोपचारसमाप्त्यनन्तरं समर्पणीयानामुपचाराणामेव अनूपचार-शब्दार्थत्वात् एतेषां नमनात्पूर्वमर्पणीयत्वे अनूपचारत्वप्रसिद्धिर्न स्यादिति चेन्न । तादृशोपचाराणामेव अनूपचारशब्दार्थत्वमित्यत्र नियामकविशेषा-भावात् । न च मध्वविजये चतुर्दशसर्गे 'स ददधिकबोधष्षोडशात्रोपचारान् व्यरहयदगुणान्द्वात्रिंशदागः पुरोगान् । अगणितगुणमुच्चैर्तोषयञ्शार्ङ्गपाणिं षडपि परमभक्त्यानूपचारान्दिदेश' (३६) इत्यत्र प्रथमं षोडशोपचारार्पणमभिधाय पश्चात् अनूपचारार्पणस्याभिहितत्वात् कथं नियामकविशेषाभाव इति वाच्यम् । षोडशोपचाराणामिव अनूपचाराणामपि अर्पणीयत्वमात्रे तात्पर्यम्, न तु तदनन्तरमेव तेषामर्पणीयत्वे । आनन्तर्यबोधकाथादिशब्दप्रयोगस्य तत्राभावात् । अन्यथा षोडशोपचारार्पणमभिधाय पश्चात् द्वात्रिंशदपराध-विसर्जनस्यापि तत्रोक्तत्वेन तस्यापि तदनन्तरमेव अनूपचारार्पणात्पूर्व-मेवानुष्ठेयत्वापत्तेः । न चेष्टापत्तिः । 'न्यस्याङ्गानि हरेस्स्वस्य न्यसेदङ्गादिकं पुनः । प्राणायामत्रयं कुर्याद् भूयो भूयः प्रसादयेत् । द्वात्रिंशदपराधांश्च ज्ञात्वा ज्ञात्वा विसर्जयेत्' (३.५८–६०)इति उद्वासनान्तरं भाविस्वाङ्गन्यासा-यनन्तरमेव तदनुष्ठेयत्वप्रतिपादकयोगदीपिकावचनविरोधप्रसङ्गात् । षोडशोपचारार्पणस्य इव द्वात्रिंशदपराधविसर्जनस्यापि अनुष्ठेयत्वमात्रे तात्पर्यं, न तु तदनन्तरमेवानुष्ठेयत्वे । तदानन्तर्यबोधकाथादिशब्दप्रयोगस्यात्रा-भावादिति चेत्समं प्रकृतेऽपि । तस्मान्नियामकविशेषाभावो नासिद्धः । नन्वेमनूपचारशब्दस्य मुखवस्त्रादिषु रूढत्वं स्यादिति चेन्न । कुसुमाञ्जलेरनन्तरं शङ्खभ्रमणात्पूर्वमर्पणीयानामनूपचारशब्दार्थत्वाङ्गीकारेण यौगिकत्वस्यैव लाभात् । शङ्खभ्रमणादावतिव्याप्तिवारणाय शङ्खभ्रमणात्पूर्वमित्युक्तम् । नैवेद्यादावतिव्याप्तिवारणाय कुसुमाञ्जलेरनन्तरं इत्युक्तम् । न चात्रापि नियामकाभाव इति वाच्यम् । ताम्बूलदक्षिणाद्यभावे केवलभोजनेन न विप्राणां तोषः । प्रत्युत कोपोदयस्यैव दृष्टत्वात् । अतस्ताम्बूलदक्षिणपुष्पाणि देयान्येव । तथा च लोकरीतिरनुसरन्तं भगवन्तमपि भोजयित्वा

ताम्बूलदक्षिणामन्त्रपुष्पैः प्रतोष्य चामरादिभोगद्रव्यार्पणं कार्यमित्यत्र लोकरीतेरेव नियामकत्वात् । ततोऽपि सुप्रसन्नं प्रति नमनं विहितम् । लोके भोगद्रव्यस्वीकारेण सुप्रसन्नेभ्यो विप्रेभ्यो नमनकरणस्य दृष्टत्वादित्यभिप्रेत्य अन्ते नमनोक्तिरपि सङ्गच्छते इति ध्येयम् । 'पादुके चेति षडिमे' इत्यत्र अनुक्तसमुच्चायकेन चशब्देन अनूपचारान्तराण्यपि ग्राह्याणि । षडिति संख्याक्लृप्तेरुक्तिस्तु प्राधान्यविवक्षया प्रधानभूतानामेव षट्संख्याकत्वात् इत्यभिप्रेत्य हि वाहनादीनीति ।। तथा च वाहनशब्दवाच्यगजाश्व-रथान्दोलिकाशिविका आदिपदेन गोसैन्याञ्जनव्यञ्जनानि पुनरर्घ्यादिपञ्चकं त्रिवारं कुसुमाञ्जलिं आभरणानि च ग्राह्याणि । महाराजोपचारान् ध्वजपताकादीन् गीतवादित्रनृत्याकान् इत्येतत्सर्वं पञ्चरात्रोक्तं निवेदयेदित्यर्थः । तदुक्तं पञ्चरात्रे–

> 'छत्रं चामरयुक्तम् । व्यजनं दर्पणं चैव पादुकान्दोलिके तथा ।
> गां सैन्यानीभमश्वं च'

इति । योगदीपिकायामपि

> मुखवासश्च ताम्बूलमञ्जनं दर्पणां तथा ।
> चामरं पादुकं छत्रं दद्यादर्घ्यादिवत्पुनः
>
> सम्प्रीतिजार्थं कुर्वीत त्रिशस्तु कुसुमाञ्जलीन् । (३.५३–५४)

इति । अन्यत्रापि

> 'ततस्तूपानहौ देयौ छत्रं वसनमेव च ।
> यानं च वाहनं चैव पताकाश्च ध्वजानि च ।।
>
> भोगानां पूरणार्थाय ततो मात्रां निवेदयेत् ।'

इति । मात्रां – आभरणम् । 'गीतवादित्रयान्'इत्यत्र वादित्रशब्देन वाद्यसामान्यं लभ्यते । अत्र गीतवाद्याद्यभावे पञ्चस्तवपारायणं कर्तव्यम् ।

'गीतवाद्याद्यभावेऽपि मम नामसहस्रकम् ।
स्तवराजं तथा पुत्र गजेन्द्रस्य च मोक्षणम् ।।

अनुस्मृतिश्च गीता च स्तवनं पञ्चधा स्मृतम् ।
पञ्चस्तवं महाभाग मम प्रीतिकरं परम् ।।'

इति तत्रैवोक्तेः । उपलक्षणमेतत् । पुस्तकवाचनं चेत्यपि ग्राह्यम् ।

'गीतं वाद्यं च नृत्यं च तथा पुस्तकवाचनम् ।
पूजाकाले चतुर्वक्त्र सर्वदा मम च प्रियम् ।'

इति स्कान्दवचनात् । अत्र चामरादिपूजोपचारद्रव्यालाभे मूलेन तुलसीदलमेकैकं समर्पयेत् ।

**ततस्तु शङ्खमापूर्य शुद्धतोयेन मुद्रिकाः**
**(ततः शुद्धेन तोयेन शङ्खमापूर्य मुद्रिकाः) ।।**

**धेन्वादीः सम्प्रदर्श्याथ तोयं शङ्खगतं स्पृशेत् ।**
**अष्टवारं जपेन्मूलं भ्रामयेत्त्रिः प्रदक्षिणम् ।।**

**शङ्खोदकं तु तत्पात्रे स्थापयित्वा पृथक् सुधीः ।**

शङ्खं शुद्धतोयेन पूरयित्वा शङ्खाग्रे शङ्खमुद्रां शङ्खमध्ये धेनुमुद्रां शङ्खपृष्ठे चक्रमुद्रां प्रदर्श्य मूलेनाष्टवारमभिमन्त्र्य 'दुष्टराक्षसपैशाचप्रमुखानां हरिद्रुहां दृष्टिविनाशाय शङ्खभ्रमणं करिष्ये इति सङ्कल्प्य 'इमा आपश्शिवतमाश्शुद्धा-श्शीतलास्सन्तु पूतास्सूर्यस्य रश्मिभिः' इति मन्त्रेण देवस्य पादादिमुकुटपर्यन्तं एकवारं नाभ्यादिमुकुटपर्यन्तं द्वितीयवारं, तथा हृदयादिमुकुटपर्यन्तं तृतीयवारं प्रादक्षिण्येन भ्रामयित्वा तदुदकं पात्रान्तरे निक्षिप्य पुनर्नीराजनं कुर्यात् ।

तत्रैकं वर्तिभिः, द्वितीयं शङ्खोदकेन. 'ततश्च सजलं शङ्खं भगवन्मस्तकोपरि त्रिर्भ्रामयित्वा कुर्वीत पुनर्नीराजनं विभोः' एकं तु वर्तिकैः प्रोक्तं शङ्खेन तु द्वितीयकम् । प्रत्येकमुपचारेषु मध्ये हस्तं तु क्षालयेत् ।' इति वचनात् ।

तदनन्तरं 'आरोपयेत्ततो वह्निं हृत्पद्मे मूलमन्त्रतः । प्रताप्य दक्षिणं हस्तं मुखेनाकृष्य वायुना ।' इत्युक्तेः अनुयागवह्नेः आकृष्य स्वहृदये आरोपः कार्यः । सुखेन वायुना आकृष्य मुखवायुद्वारा अन्तर्नीत्वा आरोपयेत्– स्थापयेदिति तदर्थः । वह्नेः प्रवेशे सति तदन्तर्गतः परशुरामोऽपि प्रविष्टो भवतीत्यनुसन्धानं कार्यम् ।

तदनन्तरं

**रमाब्रह्मादिदेवानां दत्वा तीर्थादिकं बलिम् ।**

इत्युक्तरीत्या पात्रे रमादीनावाह्य 'अहं रुद्रेभिः' (ऋ.सं.१०–१२५)इत्यादि ऋक्पञ्चकेन रमामभिषिच्य, 'बळित्था' (ऋ.सं.१०–१४१)इत्यादिमन्त्रैः मुख्यप्राणादीनप्यभिषिच्य

'रमाब्रह्मादयो देवास्सनकाद्याश्शुकादयः ।
विष्णोः समर्पितमिदं सर्वे गृह्णन्तु वैष्णवाः ।'

इति मन्त्रेण विष्णुपादोदकं त्रिः समर्प्य निर्माल्यगन्धश्रीतुलसीदलपुष्पाणि समर्प्य विशिष्य रमायै हरिद्राकुङ्कुमे समर्प्य भगवता भुक्तशेषं त्रेधा विभज्य वैश्वदेवार्थमेकं स्थापयित्वा भागद्वयमध्ये भगवता घ्राणेन्द्रियेणाघ्रातं भागं रमायै स्वीकर्तुं प्रार्थयित्वा

'गण्डूषं दन्तशोधं च पादक्षालनमेव च ।'

इति वचनानुसारेण गण्डूषं दन्तधावनं पादप्रक्षालनं च समर्प्य

'आस्वादितं तु हरिणा विमलैश्शुभदृष्टिभिः ।
तत्सर्वं प्रार्थयेत्तेन तारतम्यक्रमेण तु ।।'

इति वचनानुसारेण ब्रह्मादिभ्यः तृतीयभागं स्वीकर्तुं प्रार्थ्य गण्डूषादीन्समर्प्य मङ्गलार्तिशेषं तेषामङ्गेषु नीराजयेत् । मन्त्रस्तु –

रमाब्रह्मादयो देवास्सनकाद्याश्शुकादयः ।
श्रीनृसिंहप्रसादोऽयं सर्वे गृह्णन्तु वैष्णवाः । इति ।

तत्र विशिष्य हनुमन्नैवेद्यविषयं

'रामदेवस्य नैवेद्यं तवाग्रे स्थापितं मया ।
गृहाण त्वं कपिश्रेष्ठ अदनाघ्राणदर्शनैः ।।

प्राकृतस्तु रसो देहे वर्धते मांसरूपके ।
अतस्त्वं तु गृहाणेदं लोकशिक्षार्थमेव च ।। इति मन्त्रमाहुः ।

अत्र च विष्णोश्च पुरतो नान्यदेवताप्रतिमा यजेत् । 'वर्जयित्वा हनूमन्तं शेषं गरुडमेव च' इति पाद्मे हनुमच्छेषगरुडव्यतिरिक्तानां भगवदग्रे पूजाया निषेधकरणात् तेषां त्रयाणामेव भगवदग्रे पूजा । न त्वन्येषाम् । एवमन्यदेवतानैवेद्यस्वीकारो न कार्यः । 'अन्येषां चैव नैवेद्यं पत्रं पुष्पं फलं जलम् । भुञ्जीत यदि मूढात्मा तत्तुल्यं सुरया भवेत्' इति निषेधात् ।

'तत्र जगत्प्रभुर्देवदेवो निर्दोषश्श्रीशवल्लभः ।
देवतासु तदन्यस्य नैवेद्यं वर्जयेद्बुधः ।।

पवित्रं पवमानस्य भुक्तशेषं जगद्गुरोः ।
भुञ्जीत भक्तिभावेन भक्तिज्ञानविवर्धनम् ।।

वायूपभुक्तनैवेद्यं न ग्राह्यमिति यो वदेत् ।
स भुक्त्वा नाराकन्घोरांश्चण्डालो भुवि जायते ।।'

इति वामनपुराणवचनात् । अन्येषामिति वचनस्य तु मुख्यप्राणान्यदेवतानैवेद्यविषयकत्वमेवेति ज्ञेयम् । मुख्यप्राणायार्पणीयं अन्नादिकं भगवत्समर्पितमेव समर्पणीयमुत तदसमर्पितम् । आद्ये तदन्नस्य भगवन्नैवेद्यप्राप्त्या मुख्यप्राणमात्रनैवेद्यत्वं न प्राप्तम् । न द्वितीयः । भगवदनर्पितान्नादेर्मुख्यप्राणास्वीकृतत्वेन तस्य सर्वथा अनिवेदितान्नत्वप्राप्त्या ज्ञानभक्त्याद्यभिवर्धकत्वाद्ययोगादिति चेन्न । भगवत्समर्पितस्यैव फलादेः

मुख्यप्राणस्य समर्पणस्याङ्गीकारेण मुख्यप्राणमात्रनैवेद्यत्वाभावस्याभावात् । आदौ भगवत्समर्पितमपि इतरदेवतानैवेद्यं सर्वथा अग्राह्यमेवेति सम्प्रदायः ।

**प्रदक्षिणनमस्कारान् सूक्तपाठं ततश्चरेत् ।।**

अत्र प्रदक्षिणादीनां उद्वासनात्पूर्वमेव कर्तव्यत्वोक्त्या तदनन्तरमेव कर्तव्यत्वपक्षो न समञ्जस इत्युक्तं भवति । षोडशोपचारसमाप्त्यनन्तरमेव उद्वासनस्य विहिततया नमनस्य षोडशोपचारस्य उद्वासनानन्तर्यासम्भवात् । अस्यैव उद्वासनानन्तर्यं नान्यस्येत्यत्र नियामकाभावात् ।

अत्र 'सूक्ते'ति भावे क्तः । तथा च सूक्तानां शोभनोक्तीनां श्रुतिस्मृतिगतानां स्तुतिरूपाणां पाठो येषु तानीति विग्रहः । तेन वैदिकसूक्तानामेव पठनोक्तेः पुराणगतानां सहस्रनामादिस्तुतीनां पठनाभाव इति परास्तम् ।

अत्र एकैकया प्रदक्षिणया महाफलमुक्तं स्कान्दे –

'पठन्नामसहस्रं तु अथ नाम च केवलम् ।
एका प्रदक्षिणा भक्त्या दहेत्पापं तदाह्निकम् ।।

प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ।
दिनसप्तोद्भवं पापं मम तिस्रः प्रदक्षिणाः ।।

तत्क्षणान्नाशयन्त्येव पापं देहे दशाह्निकम् ।
अष्टोत्तरं शतं येन कृता भक्त्या प्रदक्षिणाः ।।

तेनेष्टं क्रतुभिस्सर्वैस्समाप्तवहुदक्षिणैः ।।'

इति । प्रदक्षिणलक्षणमप्युक्तं ब्रह्माण्डपुराणे –

'आसन्नप्रसवा नारी पूर्णकुम्भं जलैर्यथा ।
उद्वहन्ती शनैर्याति तथा कुर्यात्प्रदक्षिणम् ।।'

इति । प्रदक्षिणायाश्चतुरङ्गत्वमुक्तं वाराहे –

पदे पदान्तरं गत्वा करौ चलनवर्जितौ ।
वाचा स्तोत्रं हृदि ध्यानं चतुरङ्गा प्रदक्षिणा ।।'

ताश्च प्रदक्षिणाः चतसृभ्यः अधिकाः एव कार्याः । न ततो न्यूनाः ।

'चतसृभ्योऽधिकाः कार्याः पूजान्ते च प्रदक्षिणाः' ।

इति तत्रैवोक्तत्वात् । दण्डप्रणामानामपि संख्याः तत्रैवोक्ताः । 'प्रणामान्दण्डवत्कुर्याचत्वारिंशत्तथाष्ट च । षट्त्रिंशद्वा चतुर्विंशद्वा षोडश द्वादशापि वा । पञ्चाधिकं सर्वथैव प्रणमेन्मामनुस्मरन्' इति । नमस्कारलक्षणमपि तत्रैवोक्तं

'सव्यजानु निधायादौ कराभ्यां च स्पृशन्भुवम् ।
जानुना दक्षिणेनापि ललाटेन भुवं स्पृशेत् ।।

पतित्वा दण्डवत्पश्चान्मूर्ध्नि वद्ध्वाञ्जलिं तथा ।
उत्तिष्ठेच्च पुनर्नत्वा जानुभ्यां च स्तुतिं पठन् ।।

मम ध्यानेन संयुक्तो नमस्कार इतीरितः ।

इति । तत्रैव अष्टाङ्गस्वरूपमभिहितम् ।

'उरसा शिरसा दृष्ट्या मनसा वचसा तथा ।
पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः ।।'

इति । नमस्काराः वस्त्रेण देहमाच्छाद्य न कार्याः ।

'अग्रे पृष्ठे वामभागे समीपे गर्भमन्दिरे ।
जपं होमं नमस्कारं नैव कुर्याद्विजोत्तमः ।।

अग्रे मृत्युमवाप्नोति स्मृतिभ्रंशं तु पृष्ठके ।
वामभागे भवेन्नाशस्सर्वकामस्तु दक्षिणे ।।'

इति स्कान्दवचनात् । प्रदक्षिणनमस्कारादिसमये न वस्त्रं वध्नीयात् इति शाण्डिल्यः ।

प्रदक्षिणे प्रणामे च पूजायां भोजने जपे ।
आश्वलायनशाखीयस्तथा स्नाने च सुव्रतः ।।

न कट्यादृतवस्त्रस्यादर्शने गुरुदेवयोः ।।

उक्तं चान्यत्र –

'श्राद्धे स्नाने सुराणां च नमस्कारे तथैव च ।
वध्नीयादम्बरं कट्यां द्विजोऽन्यो वह्वृचं विना ।

इति । एकं सूक्तस्तोत्रपाठपूर्वकं प्रदक्षिणनमस्कारान् विधाय

**आरुह्य वेदिकां पश्चात् पूजासाद्गुण्यकारकम् ।**
**मूलमन्त्रं हरिं ध्यायन् जपेदष्टोत्तरं शतम् ।।**

**तत्त्वन्यासान् मातृकाश्च पुनर्मूर्तौ समाचरेत् ।।**

**पुनर्ध्यात्वा हरिं देवमात्मा देवेत्यृचं पठेत् ।**

वेदिकामारुह्य पूजासाद्गुण्यसिद्ध्यर्थं अष्टोत्तरशतं मूलमन्त्रं जप्त्वा प्रतिमायां पुनः तत्त्वन्यासमातृकान्यासौ विधाय 'ओं क्रुद्धोल्काय नमः इत्यादिमन्त्रपञ्चकेन पञ्चाङ्गन्यासं अष्टाक्षरन्यासं च विधाय 'उद्यद्भास्वत्' इति ध्यात्वा 'आत्मा देवानां...' इति 'यज्ञेन यज्ञं' इति मन्त्रद्वयं पठित्वा –

**तत आवाहनीं मुद्रां व्युत्क्रमेण विधाय च ।।**

**एह्येहीति पुनः प्रोच्य पुनरावाहयेद्धृदि ।**

आवाहनादिषण्मुद्राः अवगुण्ठनमारभ्य आवाहनमुद्रापर्यन्तं व्युत्क्रमेण विधाय 'भोः स्वामिन् एहि एहि' इति द्विवारमुच्चार्य तुलसीपुष्पसहितं स्वाञ्जलिं प्रत्यागतं भावयेत् । अत्र देवताभिः सहैव 'एहि एहि' इति प्रार्थना कार्येतिसम्प्रदायविशेषोऽत्रानुसन्धेयः । तदनन्तरमञ्जलिं वामनासापुटेन योजयित्वा स्वशिरसि संस्थाप्य वामनासाद्वारा ब्रह्मरन्ध्रं प्रविश्य सुषुम्नामार्गेण

हृत्पद्मं प्रविश्य प्रवेशे प्रतिमायां सन्निधानाभावापत्त्या ताम्रादिपात्रसाम्यं स्यादिति वाच्यम् । पूजया सन्तुष्टो भगवान् प्रतिमायां स्वसन्निधानलाभाय स्वकलां स्थापयित्वैव हृत्पद्मं प्रविशतीत्यङ्गीकारात् । न च प्रतिमायां स्थापनाङ्गीकारे कलाया एव पूजनसम्भवात् हृत्पद्मगतरूपस्य प्रतिमायामावाहनं व्यर्थं स्यात् । मानसपूजाकाले तत्पूजाया अपि जातत्वादिति वाच्यम् । अन्तः पूजितोऽप्यहं प्रतिमायामावाहितः सन् तत्कलया ऐक्यं प्राप्यैव पूजनं गृहीत्वा भक्तेभ्यः फलं दास्यामि इति भगवत्सङ्कल्पविशेषसद्भावात् इति सम्प्रदायविदः ।

**तथैव परपूजायां रव्यादौ तं निधापयेत् ।।**

परार्थमेव यदि पूजा क्रियते, तदा 'ध्येयस्सदा' इति मन्त्रेण 'अङ्गारवर्णं' इति मन्त्रेण वा ध्यात्वा आवाहनादिमुद्राः पूर्ववत् व्युत्क्रमेण विधाय भोः स्वामिन् पीठावरणदेवताभिः सह एहि एहि इति प्रार्थनया स्वाञ्जलिं प्रत्यागतं भावयित्वा तेनैव मन्त्रेण मूलमन्त्रेण वा भोः स्वामिन् सूर्यमण्डलं वह्निमण्डलं वा प्रविशेति प्रार्थनया तत्र प्रवेशयित्वा तत्तद्गतमूर्त्यापि एकीभूतमनसं दध्यात् । एवं पीठावरणदेवतानामपि रूपान्तरैः प्रतिमासमीपं प्रत्यागतानां स्वस्वमूल-रूपैरेकीभावानुसन्धानमपि कार्यम् । ततः

**याचेऽहं त्वा हृषीकेश नमामि पुरुषोत्तम ।**
**हृदि मे कुरु संवासं श्रिया सह जगत्पते ।।**

**इति प्रार्थ्य हरिं ...**

अत्र हृदि मे इत्यस्य स्थाने भास्करे इति पाठं वा ज्वलने इति पाठं वा परिकल्प्य प्रार्थना कार्या ।

**पश्चाद्विदध्यात्तत्त्वमातृकाः ।**
**ध्यात्वा समर्पयेद्विष्णुं यस्य स्मृत्येति मन्त्रतः ।।**

स्वयमपि तत्त्वन्यासमातृकान्यासौ कृत्वा प्राणायामत्रयं कृत्वा पश्चात्सम्प्रार्थयेद्धरिम् ।

'नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलम् ।
तथापि मत्कृता पूजा त्वत्प्रसादेन नान्यथा ।।

न जाने कर्म यत्किञ्चिन्नापि लौकिकवैदिके ।
न निषेधविधि विष्णो तव दासोऽस्मि केवलम् ।।

मन्त्रतस्तन्त्रतच्छिद्रं देशकालार्हवस्तुतः ।
सर्वं करोति निच्छिद्रमनुसङ्कीर्तनं तव ।।

त्वद्भक्तिस्त्वतुला मह्यं त्वत्प्रसादात्पुनः पुनः ।
कर्मन्यासो हरेरेवं विष्णोस्तृप्तिकरस्सदा ।।

मादृशो न परः पापी त्वादृशो न दयापरः ।
दासोऽयमिति तां मत्वा क्षमस्व पुरुषोत्तम ।।

रक्षतीत्येव विश्वासस्तदीयोऽहमिति स्मृतिः ।
शरणागतिरेषा स्याद्विष्णोर्मोक्षफलप्रदा ।।

स्थितिस्सेवा गतिर्यात्रा मतिश्चिन्ता स्तुतिर्वचः ।
अहो सर्वात्मके विष्णौ सुधियां सर्वदार्चनम् ।।'

इति सम्प्राध्य द्वात्रिंशदपराधान् विसर्जयेत् । इति ते च वाराहे प्रतिपादिता ज्ञेयाः ।

तदनन्तरं 'यस्य स्मृत्या च नामोक्त्या तपस्सन्ध्याक्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् । मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन । यत्कृतं तु मया देव परिपूर्णं तदस्तु मे । अनेन सर्वदेवः पूजात्मकेन कर्मणा श्रीभारतीरमणमुख्यप्राणान्तर्गतश्रीलक्ष्मीनारायणः प्रीयतां प्रीतो भवतु श्रीकृष्णार्पणमस्तु । इति समर्पणं कार्यम् ।

सदाचारदर्पणे तु 'समर्प्य हरये सर्वमात्मन्युद्वासयेद्धरिम्' इति वचनानुसारेण उद्वासनात्पूर्वमेव यस्य स्मृत्येति समर्पणं कार्यमित्यङ्गीकृतम् ।

एवं देवपूजा समाप्य देवयज्ञभूतयज्ञपितृयज्ञाख्यक्रमत्रयात्मकवैश्वदेवकर्म कुर्यात् । तत्प्रकारश्च अस्मत्कृतपद्धतौ द्रष्टव्यः ।

एवं वैश्वदेवं कृत्वा तुलसीपूजां विधाय अतिथिपूजारूपमनुष्ययज्ञे कर्तव्ये आचम्य प्राणानायम्य देशकालादि सङ्कीर्त्य 'नारायणाय.... नमामि' । ब्राह्मणान्तर्यामिश्रीमदाचार्याणां हृत्कमलमध्यनिवासि अनन्तकल्याणगुणगण-परिपूर्णक्षीराब्धिशायि श्रीकुलदेवतेष्टदेवताप्रीत्यर्थं ब्राह्मणसमाराधनं करिष्ये इति सङ्कल्प्य अक्षतोदकं विसृज्य श्रीमट्टीकाकारादिगुरुभ्यः तीर्थनैवेद्यादिकं दत्वा 'यतिहस्ते इति मन्त्रेण –

**तीर्थप्रसादगन्धादीन् दत्वा विष्णुपराय च ।**
**ततः स्वयं तु गृह्णीयाद्भक्त्या नत्वां हरिं स्मरन् ।।**

'शंखमध्ये स्थितं तोयं भ्रामितं केशवोपरि ।
अङ्गलग्नं मनुष्याणां ब्रह्महत्यादिकं दहेत् ।।'

इत्युक्तमहिमोपेतं शङ्खोदकं प्रथमतः शिरसि धृत्वा तीर्थं गृह्णीयात् । तच्च 'वस्त्रं तु त्रिगुणीकृत्य तत्र पाणि निधाय च । पाणौ पाणि निधायाथ त्रिः पिबेत्तीर्थमञ्जसा । प्रथमं कायशुद्ध्यर्थं द्वितीयं धर्मसाधनम् । तृतीयं मोक्षमाप्नोति एवं तीर्थं त्रिधा पिबेत् । विष्णुपादोदकं दिव्यं त्रिः पिबेत्सततं नरः । एकादश्यामेकवारं तीर्थं तु तुलसीं विना' इति भारद्वाजसंहितानुसारेण ग्राह्यम् ।

अत्र विशिष्य एकादश्यां तुलसीं विना तीर्थसेवनोक्त्या तदतिरिक्ततिथिषु तुलसीसहितमेव तीर्थं ग्राह्यमित्युक्तं भवति । निरन्तरमष्टादशदलानां स्वीकारस्य विहितत्वात् । तदुक्तम् –

'निर्माल्यं नाभिशिरसोः कर्णयोर्धारयेत्सुधीः ।
चतुष्कर्णे मुखे चैकं नाभ्यामेकं तथैव च ।।

शिरस्येकं तथा प्रोक्तं तीर्थे त्रयमुदाहृतम् ।
अन्नोपरि तथा पञ्च भोजनान्ते दलद्वयम् ।।

इति । तत्रापि शिरसि प्रोक्षणं तदनन्तरं तीर्थप्राशनं तदनन्तरं पुनः प्रोक्षणं कार्यम् । प्राशनकाले भूमौ तद्बिन्दुपातनं न कार्यम् ।

'आदौ धृत्वा ततः पीत्वा पुनश्शिरसि धारयेत् ।
सालिग्रामजलं पीत्वा कोटियज्ञफलं लभेत् ।

तस्मादष्टगुणं पापं भूमौ तद्बिन्दुपातनात्' । इति पाद्मोक्तेः ।

'विष्णुपादोदकं पीत्वा पुण्यं यस्तु स्वमस्तके ।
प्रक्षेपणं प्रकुर्वीत ब्रह्महत्यां व्यपोहति ।।'

वाराहे च –

'यः पुमान्मन्दबुद्धित्वात् पिबन्विष्णुपदोदकम् ।
न करोति यदा मूर्ध्नि तमाहुर्ब्रह्मघातकाः ।।'

इत्युक्तम् । तथा तीर्थं पीत्वा हस्तं न प्रक्षालयेत् ।

'विष्णुपादोदकं पीत्वा पश्चादशुचि(दुच्छिष्ट)शङ्कया ।
यः क्षालयेत्करौ मोहात्पापपञ्चकमाप्नुयात् ।।'

इत्युक्तेः । तीर्थप्राशनमन्त्रस्तु –

'तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति ।
उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ।
(ऋ.सं.१–१५५–५)

अस्यार्थस्तु – मन्त्रद्रष्टुर्वाक्यमिदम् । अहं तत् –प्रसिद्धं अस्य विष्णोः प्रियं – प्रीतिसाधनं विष्णोः परमे पदे – स्थाने सालिग्रामादिस्थाने अभिपाथः

– अभिषेकोदकम् । उपसर्गाणां क्रियासन्निधानाभावे साधनक्रियावाचित्वात् । अस्यां विम्वे ये देवयवो देवत्वमिच्छवो नरः पुरुषाः यत्र विष्णुपादोदकपाने मदन्ति – हृष्यन्ति । सः तीर्थपानकर्ता उरुक्रमस्य विष्णोः वन्धुर्हि । एवमेव मध्वः – श्रीमदानन्दतीर्थोऽपि उत्सः – उत्कण्ठवान् विष्णुवन्धुर्जात इति । एवं तीर्थं प्राश्य भोजनादिस्वापान्तकर्म यथाविधि कुर्यादित्यशेषमतिमङ्गलम् ।

**पद्यपाठे मनुष्याणां श्रमो नातिभवेदिति ।**
**तन्त्रसारोक्तपूजायां पद्यमालेयमीरिता ॥**
**अनेन भगवान् विष्णुः प्रीतो भवतु सर्वदा ।**
**प्रमादत्तो निरोधाद्वा हरेः पूजा भवेन्न चेत् ।**
**पठनात् पद्यमालायाः नरः पूजाफलं लभेत् ॥**
**इति श्रीजयतीर्थार्यभिक्षुणा रचिता सती ।**
**तन्त्रसारोक्तपूजानुसारिणी पद्यमालिका ॥**

॥ इति श्रीजयतीर्थपूज्यपादविरचिता पद्यमाला सम्पूर्णा ॥

पद्यमालादिकान्ग्रन्थानवलोक्यं यथामति ।
कृतेयं देवपूजायाः पद्धतिस्सत्प्रहर्षणी ॥१॥

मध्वमाधवयोः प्रीतिर्मुख्यमस्य प्रयोजनम् ।
शिष्याणां प्रार्थना त्वत्र प्रयोजनमनन्तरम् ॥२॥

गुणाऽनाम्रागुणैर्व्याप्तदोषा एवात्र सन्त्यलम् ।
ताननादृत्य विद्वांसः प्रीयतां गुणलोलुपाः ॥३॥

अस्मद्गुरुहृदम्भोजवासी श्रीहनुमद्गुरुः ।
प्रीयतामनया कृत्या भगवाञ्जानकीपतिः ॥४॥

॥ इति श्रीमज्जयार्यपूज्यपादाराधकेन श्रीमच्छेषाचार्यसूनुना जयरामेण विरचिता देवपूजाकल्पलता समाप्ता ॥

॥ श्रीकृष्णार्पणमस्तु ॥